अभिनिवेशप्रकाशे प्रथमः कणः—



# श्री क ण्ठ स मा लो च न म्



श्रीब्रह्मतन्त्रस्वतन्त्रपरकालास्थान्यां ३३तमे पदे मूर्धाभिषिक्तानां
श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनव-
रङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकानां
नियमनानुसारेण


पण्डितरत्नेन विदुषा
नव्यमङ्गलाभिजन वरदाचार्येण


विरचितम्


श्रीमद्वेदान्तदेशिकविहारसभा मुद्राक्षरैर्मुद्रिता
म ही सु र पु री
१९६३

अभिनिवेशप्रकाशे प्रथमः कणः—



# श्री क ण्ठ स मा लो च न म्



श्रीब्रह्मतन्त्रस्वतन्त्रपरकालास्थान्यां ३३तमे पदे मूर्धाभिषिक्तानां
श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनव-
रङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकानां
नियमनानुसारेण

पण्डितरत्नेन विदुषा
नव्यमङ्गलाभिजन वरदाचार्येण

विरचितम्

श्रीमद्वेदान्तदेशिकविहारसभा मुद्राक्षरैर्मुद्रिता

म ही सु र पु री

१९६३

॥ श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ॥

लक्ष्मीहयास्यपादाब्जद्वन्द्वमाध्वीमधुव्रतः ।
जयतान्नः परङ्केन्द्र परकालयतीश्वरः ॥

सुविदितमेव समेषामेव विदुषां यत् रामानुजाचार्याः पूर्वोत्तरमीमांसावृत्तिकाराणां पन्थानमेवानुरुन्धानाः " विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः , तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते " इति प्रतिज्ञाय यथाप्रतिज्ञं विशिष्टाद्वैतपरं ब्रह्मसूत्राणां व्याख्यानं श्रीभाष्यं व्यररचन्निति । विवर्ताद्वैतमातिष्ठमाना अपि हरिहराद्वैतवादिनश्शङ्कराचार्या विष्णुवैष्णवविद्वेषविदूरा एव प्रस्थानत्रयं व्याचख्युः । न केवलं तेषां विष्णावद्वेषमात्रम् , अपि तु नृसिंहतापनीयोक्तमर्थमभिसन्धाय " लक्ष्मीनृसिंह मम देहि करावलम्बम् " इति करुणारसस्तोत्रे '

रामोत्तरतापनीयोपनिषदभिसंहितमर्थं—

यदा कर्णयत्कर्णमूलेऽन्तकाले शिवो रामरामेति रामेति काश्याम् ।
तदेकं पर ब्रह्म रामेत्युपाख्यं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥

इति रामभुजङ्गप्रयातस्तोत्रे ,

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये वदनसरोजे निरन्तरं वसतु ॥

इति षट्पदीस्तोत्रे च द्वयाख्यमन्त्ररत्नार्थं अनुसन्दधानास्स्वस्य नारायणे भक्तिप्रकर्षमेवाविष्कुर्वन्ति स्म । एवं विष्णुसहस्रनामभाष्ये—

' हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥

इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं महेश्वरेणापि ' इत्यनुवदन्तश्शिवादुत्कर्षं विष्णोस्स्वाभिमतं स्फुटमेवावेदयन्ति शङ्कराचार्याः । एवं वस्तुस्थितौ सत्यां , अर्वाचीना अप्पयदीक्षिता आबाल्यात् स्वयं शाङ्करमतावलम्बिनोऽपि केनचित्कारणेन क्रोधाविष्टाः दुरभिनिवेशवशीकृतचेतसः विष्णुवैष्णवप्रद्वेषपरवशाः शिवपारम्यस्थापनैदम्पर्येण प्रवृत्ताः शङ्कराचार्याभिमतनादार्थनारायणपरत्वविपरीतार्थं च कथयन्तः ब्रह्मसूत्राणां स्वोपज्ञं किञ्चिद्भाष्यं विधाय , तत् शिवार्कम-

॥ श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ॥

लक्ष्मीहयास्यपादाब्जद्वन्द्वमाध्वीमधुव्रतः ।
जयतान्नवरङ्गेन्द्रपरकालयतीश्वरः ॥

सुविदितमेव सर्वेषामेव विदुषां यत् रामानुजाचार्याः पूर्वोत्तरमीमांसावृत्तिकाराणां पन्थानमेवानुरुन्धानाः "विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति प्रतिज्ञाय यथाप्रतिज्ञं विशिष्टाद्वैतपरं ब्रह्मसूत्राणां व्याख्यानं श्रीभाष्यं व्यरचयन्निति । विवर्ताद्वैतमातिष्ठमाना अपि हरिहराद्वैतवादिनश्शङ्कराचार्या विष्णुवैष्णवविद्वेषविदूरा एव प्रस्थानत्रयं व्याचख्युः । न केवलं तेषां विष्णावद्वेषमात्रम्, अपि तु नृसिंहतापनीयोक्तमर्थमभिसन्धाय "लक्ष्मीनृसिंह मम देहि करावलम्बम्" इति करुणारसस्तोत्रे'

रामोत्तरतापनीयोपनिषदभिसंहितमर्थं—

यदा कर्णयत्कर्णमूलेऽन्तकाले शिवो रामरामेति रामेति काश्याम् ।
तदेकं परं ब्रह्म रामेत्युपाख्यं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥

इति रामभुजङ्गप्रयातस्तोत्रे,

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये वदनसरोजे निरन्तरं वसतु ॥

इति षट्पदीस्तोत्रे च द्वयाख्यमन्त्ररत्नार्थं अनुसन्दधानास्स्वस्य नारायणे भक्तिप्रकर्षमेवाविष्कुर्वन्ति स्म । एवं विष्णुसहस्रनामभाष्ये—

'हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥

इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं महेश्वरेणापि' इत्यनुवदन्तश्शिवादुत्कर्षं विष्णोस्स्वाभिमतं स्फुटमेवावेदयन्ति शङ्कराचार्याः । एवं वस्तुस्थितौ सत्यां, अर्वाचीना अप्पयदीक्षिता आबाल्यात् स्वयं शाङ्करमतावलम्बिनोऽपि केनचित्कारणेन क्रोधाविष्टाः दुरभिनिवेशवशीकृतचेतसः विष्णुवैष्णवप्रद्वेषपरवशाः शिवपारम्यस्थापनैदम्पर्येण प्रवृत्ताः शङ्कराचार्याभिमतनादार्थनारायणपरत्वविपरीतार्थं च कथयन्तः ब्रह्मसूत्राणां स्वोपज्ञं किञ्चिद्भाष्यं विधाय, तत् शिवार्कम

णिदीपिकाख्यया स्वोपज्ञव्याख्यया संयोजयन्तः प्रस्थानत्रयस्यापि शिवपारम्यपरतामातिष्ठन्ते स्म । शिवतत्त्वविवेकादावेतेषामभिनिवेश स्फुटः । अत एव वादनक्षत्रमालायां द्वाविंशवादे भस्मोद्धूलनादेः सर्वब्रह्मविद्याङ्गत्वसमर्थनाय सरभसमेते प्रावर्तन्त । इदानीं केचनशाङ्करमतावलम्बिनोऽपि विष्णुवैष्णवविद्वेषबहुला "आत्मद्रोहममर्यादं" इत्यादि प्रमाणगोचरतयाऽनुकम्पनीयास्समजायन्त । न केवलं तावन्मात्रे विश्रान्ताः—शङ्कराचार्याणामपि विष्णुवैष्णवविद्वेषवत्त्वमुपवर्णयन्ति । प्रवदन्ति च रामानुजभाष्यं श्रीकण्ठभाष्यप्रकृतिकमिति । स्वयं च शिवालयनिर्माणादिकं कारयन्तो विष्णुप्रद्वेषस्य परां काष्ठामातिष्ठन्ते । तमेनं विषयमधिकृत्य तत्त्वस्थितिं प्रकाशयितुकामाः श्रीमन्तोऽस्मत्प्रियसुहृदः कोत्तिमङ्गलं वरदाचार्याः श्रीकण्ठसमालोचनाभिधं विमर्शनरूपं कञ्चनग्रन्थं व्यतन्वत । तमेनं विमर्शं गुणग्रहणैकप्रवणा निर्मत्सरास्सुधियश्शङ्कराचार्यभक्ता अपि समालोचयन्तः सर्वे कल्याणगुणाकरस्य करुणामयस्य नारायणस्य तद्भक्तिपरवशचेतसां शङ्कराचार्याणां चानघकृपास्पदं भूयासुरिति कल्याणगुणनिधिं भगवन्तं नारायणं प्रार्थयते—

श्रीमदाचार्यकृपापात्रम्

आत्मकूरु दीक्षाचार्यः

# विज्ञापना

सन्ति बहूनि निदानानि ग्रन्थरचनायाम् । प्राचीने काले—दया , वात्सल्यं , दैवप्रेरणा इत्यादीनि , अद्यतने च प्रायः ख्यातिः , लाभः , पूजा , द्वेषः , असूया इत्यादीनि । को वा ह्यद्यतनग्रन्थकर्तृषु तत्तादृशतत्त्वसाक्षात्कर्ता , यः दयाभिरेव ग्रन्थं रचयेत् । सर्वोऽपि हि पण्डितलोकः केवलसंप्रदायैकशरणः कतिपयवाक्यानि शुकवदावर्तयन् स्वाभिमतमर्थं तदुपर्यारोपयन् द्वेषासूयादिभिः स्वान्तःकरणं पूरयंश्च तावतैवात्मानं ज्ञानिनामग्रेसरं मन्यते । परन्तु प्रकृतश्रीकण्ठसमालोचनरचनायां निदानं तु नैतेष्वन्यतममपि , किन्तु निर्वेद एव ॥

लोके हि सामान्यत एव ज्ञानिनः अतीव विरलाः । तत्राप्यध्यात्ममार्गे किमु ! ' मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ' इति भगवद्वचनं कदा वा कथं वा वितथं स्यात् ? एतादृशो ज्ञानी स्ववचनाचरणादिभिः इतरान् सामान्यजनान् क्रमशः सन्मार्गे प्रवर्तयितुमलं भवति ॥ ' यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ' इति तु अक्षरशः सत्यमेव । तदेवं लोकानामादर्शत्वेन तैः परिगृहीतस्य नरस्य भार. अनन्यसाधारण एव भवति । ' स्वोक्त्या स्वाचारेण यः कश्चित्सामान्यजन अबुद्धिपूर्वकं वा अपथे कदाचित् अवतरेद्वा ' इति प्रतिपदं आत्मा शोधनीयः तादृशेन नरेण ॥

एवं वस्तुतत्त्वे सति तादृश कश्चित् लोकानामादर्शत्वेन गृहीतः , स्वय च युक्तायुक्तविवेचनशक्तियुक्तोऽपि स्वयं नष्टः बुद्धिपूर्वकमेव सर्वान् प्रतारयामास च , तेन प्रतारिताश्च बहवो विपथे प्रवृत्ताः इति प्रत्यक्षतः पश्यतः कस्य वा हृदये ' अहो ! कलेर्महिमा ' इति विस्मयः , ततो निर्वेदश्चावकाशं कथं न प्राप्नुयात् ?

को वा तादृशः ? इति प्रश्नस्य उत्तरदानाय लेखन्यपि किञ्चित् सङ्कुचति । ' तत्तादृशाः सुप्रसिद्धाः अप्पयदीक्षिताः एवं सर्वान् प्रतारयामासुः ' इति कथनं ममापि चेतः खेदयति । को वा प्रतीयादिदं मर्मपरिज्ञानवतोऽन्यः ? परन्विदं दुरपह्नवं सत्यमेव । बहूनां मनस्सु

विपरीते संस्कारे रूढमूले सति नैतद् हितं भवेदिति जानाम्येव । प्रत्युत पुनरपि भूयः आत्मानं बुद्धिपूर्वकमेव कालुष्यदुष्कूपे पातयन्तः आत्मद्रोहेणैव यथेच्छं निन्देयुरित्यपि जानामि । अथापि यः कश्चिद्वा प्रामाणिकः एतत्प्रबन्धेन कदापि प्रसन्नहृदयो भवेदेवेति तावतैवात्मनः प्रयत्नं सफलं मनुतेऽयं जनः ॥

तत्तादृशाः आदर्शत्वेन गृहीताः स्वयं पण्डिता अपि केनचिदल्पोपाधिना आत्मद्रोहिणो बभूवुः किल ! तदनन्तरकालिका अपि बहवः पण्डिता तत्त्वं जानन्तोऽपि स्वपरान् प्रतारयन्त एव खलु वर्तन्ते !! इति महतो निर्वेदात् कुत्रचित् तदनुगुणाः शब्दाः अवशादेव पतिताः । अतः तादृशानां पदानामक्षरार्थो न ग्राह्यः, किन्तु तन्मूलभूतो निर्वेद एव स्मरणीय इति प्रार्थये । एवं अजामिलचरित्रमध्ये मध्ये ग्रथिता नर्मोक्तयोऽपि न कमपि स्पृशन्तीति च हार्दमावेदयामि ॥

इदन्त्वत्र कदापि न विस्मरणीयम्—नायं ग्रन्थः एकस्य मतस्य संप्रदायस्य वा दूषणभूषणोद्देशेन प्रवृत्तः । किन्तु सामान्यजनानां अनुकरणीयाः विद्वांस करणत्रयशुद्धिमन्तो नाभूवन् किल ! इति निर्वेदस्य परिवाह एवायं ग्रन्थः । अत एव यः कश्चिदत्रत्यं विषयं निन्दन् प्रथमतः आत्मानं शोधयतु । यदि च तादृशः कश्चित्पुरुषधौरेयः, ग्रन्थस्यास्यातिसंक्षिप्तत्वात् तत्र तत्र सुलभावकाशं संशयादिकं आक्षेपादिकं वा परिजिहीर्षति, तादृक्पुरुषधौरेयस्य साहाय्ये वयं सदा सन्नद्धादरा एवेति विज्ञापयामः ॥

सर्वमेतदनाकलयन् आग्रहान्धः यः कश्चित् स्वैरं निन्दन् यत्किञ्चिल्लिखेत्—तं प्रतीदमेव वदामः—

‘यदीहाल्पं वा स्वहृदयविसंवादि लिखितम् ।
भवेयं दुष्पारप्रचुरनिरयस्येन्धनमहम्’

इति आत्मानमेव साक्षीकुर्वन् निन्दतु कामं स इति ॥

नव्यमङ्गलाभिजन

वरदार्यः—

# विषयपरिचयः

अवदधतु सर्वेऽपि विपश्चिदपश्चिमा विगतमत्सरा !——
अप्पयदीक्षितः 'श्रीभाष्यकर्तारः श्रीमद्रामानुजाचार्याः श्रीकण्ठभाष्यानुकारिणः' इति उपहसन्ति । पुरुषोत्तमाविष्कारादयस्तु 'श्रीकण्ठभाष्यकर्ता रामानुजभाष्यचोरः' इति प्रकाशयन्ति । अनयोः कः प्रामाणिकः? एतत्पक्षद्वयप्रवर्तकयोरुभयोरपि विद्वच्छ्रेष्ठत्वेन पण्डितगोष्ठीप्रतिपन्नत्वात् आप्तवाक्य-बलं विनिगमकमपि दुर्वचमेव भवति । अतः स्वयं निर्मत्सरविमर्शनेन विना नायमर्थो निर्णेतुं शक्येत ॥

तत्र शङ्करमतीयत्वेनात्मानं वाचा प्रकटयन्तः केचित् (1) विद्यारण्यविरचिते शङ्करविजये श्रीकण्ठस्य श्रीशङ्कराचार्यपराजितत्ववर्णनेन, (2) वेदार्थसंग्रहे रामानुजाचार्यैः श्रीकण्ठमतस्य दूषितत्वेन (3) रामानुजाचार्यापेक्षया प्राक्तनत्वेन सम्प्रतिपन्नेन भास्करेण श्रीकण्ठभाष्यस्य दूषितत्वेन च श्रीकण्ठ एव प्राचीनः । अतश्च रामानुजाचार्य एव श्रीकण्ठभाष्यानुकारीति साट्टहासं दीक्षितमतं संरक्षयन्ति ॥

एवमन्यतरपक्षे उपपत्तेः प्रदर्शनेन "किमत्र तत्त्वम्? 'मूढः परप्रत्ययनेयबुद्धिः' इतिवत् न वर्तितव्यम्' इति मनीषया कूलंकषविचारणाय प्रवृत्तमभूदस्माकं मनः स्वयमेव सोत्साहम् । असंख्याताः प्रबन्धाः परिशीलिताः । बहवः पण्डिता वृद्धाश्च उपसर्पिताः । दूरतो मात्सर्यमुत्सार्य तत्त्वगवेषणदृष्ट्यैव क्षोदक्षमं विमर्शः कृतः । तत्रान्ते आत्महिताय सञ्जातो निर्णयः लोकहिताय प्रकटनीय इति निर्मत्सरैः श्रीपरकालास्थानमूर्धाभिषिक्तैः श्री श्रीस्वामिचरणैः आज्ञापनात् अयमत्र प्रकटीक्रियते । तत्त्वजिज्ञासुलोकः, विशिष्य शङ्कराचार्यमतं च कियानधमर्णः श्री श्रीस्वामिसन्निधावपि नाद्यास्माभिः वक्तव्यम्, यतः आगामी निर्मत्सरो विद्वल्लोकः उद्घोषयिष्यति तत्त्वम् ॥

अत्र तु सुग्रहणाय प्रधानविषयाः क्रोडीकृत्य संक्षिप्य प्रदर्श्यन्ते । विस्तरस्तु तत्र तत्र प्रदर्शितपुटेषु द्रष्टव्यः—

(1) विद्यारण्यशङ्करविजयः ऐतिह्यनिकाशे न सर्वथा प्रमाणमिति विमर्शकानां सर्वेषामप्रकम्प्यो निर्धारः । श्रीमद्रामानुजाचार्येभ्यः अर्वाचीनत्वेन प्रतिपन्नं इदानीन्तनैरद्वैतिभिः स्वमतप्रतिष्ठापकाग्रगण्यत्वेन जोघुष्यमाणं श्रीहर्षमपि शङ्करपराजितं वर्णयत् तत्काव्यं कथमैति-

हासिकांशे प्रमाणं स्यात् ? (पुष्ट-८) प्रत्युत तत्र नीलकण्ठनामैव दृश्यते, न तु श्रीकण्ठस्य नामापि। स च नीलकण्ठः हरदत्तगुरुरिति च। दीक्षितस्तु श्रीकण्ठं हरदत्तानुयायिनं लालयति (१५) सोऽपि नीलकण्ठः केवलं विद्यारण्यकालीनः (१८) तस्य वास्तविकत्वेऽपि स न ब्रह्मसूत्रभाष्यकर्ता, अपि तु शिवसूत्रभाष्यकर्तैव। एवमनभ्युपगमे अद्वैतिनामेव महाहान्यावहं तत् (१८)॥

(2) वेदार्थसंग्रहे श्रीकण्ठभाष्यं दूषितमिति कथनं परप्रतारणमेव। न हि तत्र श्रीकण्ठस्य तद्भाष्यस्य वा नाम, तदानुपूर्वी वा दृश्यते। स्वस्य श्रीकण्ठानुकारित्वप्रच्छादनायैव तन्नामादिकं नोत्कीर्तितमित्यादिकं तु निरयमेव साधयेत, न तु स्वमुधाग्रहम्। तदा तन्मतस्पर्शनमपि वर्ज्यमेव खलु स्यात्। (१२) किञ्च विषयदृष्ट्या वेदार्थसंग्रहे न सर्वथा श्रीकण्ठमतमनूद्य दूषितम्, अपि तु हरदत्तादिसम्मतः पक्ष एव (२५)। श्रीकण्ठः हरदत्तानुयायीति दीक्षितवचनं तु सुतरामप्रामाणिकम्, यत श्रीकण्ठहरदत्तयो: लेशतोऽपि आनुरूप्यं नैवास्ति (३०)॥

(३) भास्करेण श्रीकण्ठभाष्यं दूषितमिति कथनं भ्रान्तिर्वा विप्रलम्भनं वेति न जानीमः। 'अत एव च स ब्रह्म' इति सूत्रमधिकमिति दूषयति भास्करः। तच्च सूत्रं न शङ्करभाष्यसम्मतम्, अपि तु श्रीकण्ठश्रीभाष्यमात्रसम्मतम। श्रीभाष्यं तु भास्करार्वाचीनमित्यत्र न विवादः। अतश्च अर्थात् भास्करभाष्यं श्रीकण्ठभाष्यमेव खण्डयतीति दुरपह्नवम, इति खल्वास्फोटयन्ति। परं तु इदानीं परिदृश्यमानेषु श्रीकण्ठरामानुजशङ्करभाष्येषु अकथिता वहवोऽर्थाः सूत्रभाष्यान्तरोक्ता भास्करेणानूद्य दूषिता। तेन च भास्करकाले शङ्करश्रीकण्ठभाष्यादपि वर्तानि [illegible]क्तानि सूत्रभाष्याण्यासन्नेवेति तत्पठितॄणां सुगमम्। श्रीवत्साङ्कविरचितमेकं भाष्य प्राचीनमासीदिति च सुस्पष्टं आगमप्रामाण्यादिभिरवगम्यते। अतश्च भास्करभाष्यं श्रीकण्ठभाष्यमेव खण्डतीति सर्वथा दुर्वचमेव (पु२१-२२)॥

प्रत्युत भास्करभाष्ये दूषितः सूत्रपाठः 'अत एवच तद्ब्रह्म' इत्येव। श्रीकण्ठभाष्ये तु 'अत एव च ब्रह्म' इति वा 'अत एव च स ब्रह्म' इति वैव। अतः भास्करेण श्रीकण्ठभाष्यं दूषितमित्युक्ति भ्रान्तिर्वा प्रतारणं वेत्येव निष्कर्षः (२३)॥

एवं श्रीकण्ठभाष्यस्य श्रीभाष्यप्राक्तनत्वसाधकानि प्रमाणानि आभासतमानीति स्पष्टम् ॥

तस्य श्रीभाष्यादनन्तरकालिकत्वेऽनन्यथासिद्धानि प्रमाणानीमानि–

(१) श्रीमद्रामानुजाचार्याणां विषयतः शब्दतो वा श्रीकण्ठानुकरणं न सम्भवति । प्रत्युत श्रीकण्ठस्यैव श्रीभाष्यानुकरणमवर्जनीयम् । विषय दृष्ट्या यामुनाचार्याः तत्प्रणीतसिद्धित्रयादयश्च श्रीमद्रामानुजाचार्याणां उपजीव्याः सन्त्येव । नैवं श्रीकण्ठस्य वक्तु शक्यम् । तेन स्वाचार्यत्वेन कथितः श्वेताचार्यः केवलं पौराणिकः , तत्कृतश्चैकोऽपि ग्रन्थः न परिदृश्यते । अतो विषयदृष्ट्या श्रीकण्ठस्यैव श्रीभाष्यानुकरणमवर्जनीयम् । श्रीकण्ठस्य हरदत्तानुयायित्वोक्तिस्तु स्वपरप्रतारणमात्रैव (२९) ॥

शब्ददृष्ट्या तु—गीताभाष्यवेदार्थसंग्रहादिरचनादिभिः प्रकटीकृतस्वायत्तवाङ्मयानां श्रीमद्रामानुजाचार्याणां न सर्वथा श्रीकण्ठोऽनुकरणीयः । श्रीकण्ठस्तु न तद्भाष्यव्यतिरिक्तग्रन्थकर्ता । अतस्तस्यैव श्रीभाष्यमनुकरणीयमापतति । श्रीकण्ठनाम्नि बेजवाडायां प्रकटीकृतं गीताभाष्यं तु श्रीकण्ठभाष्योक्तसिद्धान्तप्रतीपमेव स्पष्टं गच्छति । अतस्तत् कुसृतिरेव केवलम् । शैवानां ब्रह्मसूत्रगीतादिबान्धव्योपलालनमत्यर्वागेवेतीममेवार्थं द्रढयतीदं गीताभाष्यम् (२९) ॥

२) भास्करशङ्करभाष्यादिकं श्रीकण्ठं तद्भाष्यं वा न स्पृशत्यर्पाति तु निश्चप्रचमेव । श्रीमद्रामानुजानन्तरकालिकाः मध्ववल्लभादयोऽपि वैष्णवाः स्वविरुद्धं शैवपारम्यं साधयदिदं भाष्यं न स्मरन्त्यपीत्येतदेवावेदयति मध्वादिभाष्येभ्योऽपि अत्यर्वाचीनमिदं श्रीकण्ठभाष्यमिति (३९) ॥

(३) श्रीकण्ठभाष्यगतं 'पूर्वाचार्यैः कलुषितम्' इति वाक्यमेवास्यात्यर्वाचीनतां स्पष्टयति । एतद्व्याख्याने व्यक्तीभवत् दीक्षितहृदयदोषादिकं लज्जावहमेव सताम् (४९) ॥

(४) ब्रह्मसूत्रप्रस्थाने शैववैष्णवकलह अत्यर्वाचीन एव काले इति निर्मत्सराः सर्वेऽपि विद्वांस । एतं कलहं प्रतिपादयदिदं भाष्यं कथं वा प्राचीन स्यात् ? (४३) ॥

५) श्रीकण्ठगुरुत्वेन दीक्षितेनोक्तं हरदत्तं उल्लिखन् सर्वदर्शनसंग्रहः श्रीकण्ठं नोल्लिखतीति ततोऽप्यर्वाचीनमेव श्रीकण्ठभाष्यमावेदयति (४४) ॥

(६) विशिष्टाद्वैततत्त्वं तु वैष्णवानामेव कुलधनं, न तु शैवानाम्। अतः विशिष्टाद्वैतं साधयत् श्रीकण्ठभाष्यं वैष्णवधनचौर्यमेव साधयति। प्राचीनशैवमतेषु विशिष्टाद्वैतशैवं न कुत्रापि दृश्यते (४६) ॥

(७) वस्तुतस्तु शैवमस्य ब्रह्मसूत्राणां च सम्बन्धः अर्वाचीन एव काले (४७)। यद्यपि श्रीकरभाष्यं, क्रियासारश्चेति वीरशैवमतीयं प्राचीनं ब्रह्मसूत्रव्याख्यानमस्तीति मन्दमतयो भ्राम्यन्ति। परन्तु श्रीकरभाष्यं पङ्क्तिशः शङ्करभाष्यं श्रीभाष्यं च तस्करोतीति चक्षुष्मतां सुगमम्। तत्र तत्राप्पयदीक्षितमुपजीवति चेति तद्भाष्यं सङ्कररूपं अप्रामाणिकमपि। वीरशैवा अपि न तत्पुरस्कुर्वन्ति (४३)। क्रियासारस्तु अप्पयदीक्षितकृतां शिवार्चनाचन्द्रिकामक्षरशः चोरयतीति तदप्यत्यन्तार्वाचीनमेव (५८) ॥

(८) श्रीरामानुजानुदाहृताः उपनिषदः श्रीकण्ठभाष्ये उदाहृताः। इदमपि तस्यार्वाचीनतागमकमिति निर्मत्सरविमर्शकसरणिः (५७) ॥

(९) श्रीरामानुजैः प्रापितप्रचारा सुबालोपनिषत् अवशतः एकत्र श्रीकण्ठभाष्ये उपात्ता। इदमावेदयति श्रीकण्ठस्य श्रीभाष्यचोरताम् (५९)

(१०) शङ्कराद्यनुदाहृता 'जानात्येवायं पुरुषः' इति श्रुतिः श्रीरामानुजार्यैरेव प्रथमं सूत्रभाष्ये उदाहृता। तामुदाहरत् श्रीकण्ठभाष्य श्रीभाष्यचौर्यं प्रकाशयति। वैपरीत्यं तु दुर्वचं—यत इयं श्रुतिः यामुनार्योपात्तेति कृत्वैव श्रीभाष्यकारैरुपादायि (६०) ॥

(११) 'गतेरर्थवत्त्वं' इत्यादि श्रीकण्ठभाष्यं रामानुजभाष्यखण्डकमिति विमर्शकाः। अतस्तदनन्तरकालिकत्वं सिद्धम् (६१) ॥

(१२) सर्वेऽप्याधुनिका विमर्शकाः श्रीकण्ठ श्रीरामानुजानन्तर-कालिकमेव ऐककण्ठ्येन वदन्ति (६२) ॥

अतः श्रीकण्ठभाष्यं सर्वथा श्रीभाष्यानन्तरकालिकमेव ॥

तर्हि को वास्य निष्कृष्टः काल इति चेत्—एकस्य ग्रन्थस्य काल-निर्णयविषये-तस्मिन् ग्रन्थे उद्धृतेतरग्रन्थग्रन्थकारनामादिकं इतरग्रन्थेषु अस्य दूषणभूषणाद्यर्थमुद्धारश्चेत्ययमेव सर्वसम्मतः अभ्यर्हिततम उपायः। एतद्दृष्ट्या परिशीलने इदं भाष्यं अप्पयदीक्षिततदनन्तरकालिकग्रन्थेष्वेवोद्धृतं दृश्यते सर्वसम्प्रतिपन्नतया। श्रीकण्ठभाष्यविमर्शनैदंपरः सूर्य-नाराणशास्त्र्यपि श्रीकण्ठभाष्यस्य प्राचीनतमः समुल्लेखः उमापतिशिवा-

चार्यकृतपौष्करभाष्ये , शिवलिङ्गभूपकृतश्रुतिसूक्तिमालाव्याख्यायां चैवेति वदति । तत्रेदं पौष्करभाष्यं 13शतकीयेन द्राविडशैवपण्डितेन सङ्कल्प-निराकरणादिग्रन्थकर्त्रा उमापतिशिवाचार्येणैव कृतमिति दृढं वक्तुं न शक्यते ; यतस्तत्र पौष्करभाष्ये 16 शतकादिमभागस्थव्यासतीर्थकृत-न्यायामृतग्रन्थ नामोद्धरणपुरस्सरं अनूदित इति स एव शास्त्री संशेते पौष्करभाष्यस्य प्राचीनताम् । परं तु संशयस्य नावसरः , अपि तु स एव निर्णय इति वक्तुं सङ्कुचति सः श्रीकण्ठपक्षपातादिति अवधेयमेतत् । शिवलिङ्गभूपेन श्रीकण्ठभाष्यमुदाहृतमिति तु केवलं भ्रान्तिरेव । अतश्च दीक्षितप्राक्तनेन न केनापीदं भाष्यं स्मृतमित्येव तत्त्वम् (६४) ॥

वात्स्यवरदार्यव्यासार्यप्रभृतयः श्रीमद्वेदान्तदेशिकप्रभृतयश्च शैवमतं खण्डयन्तोऽपि श्रीकण्ठभाष्यं न कुत्रापि खण्डयन्ति ; अपि तु तदति-रिक्तमेवेति स्तोत्रभाष्यादितः स्पष्टमवगम्यते (६६) ॥

निष्कर्षतः कथनेन तु 16 शतकाद्यभागस्थः व्यासतीर्थः स्वीयचन्द्रि-कायां 'प्रतिसूत्रं प्रकाश्येते घटनाऽघटने मया । स्वीयान्यपक्षयोः' इति प्रतिजानानः शङ्कररामानुजभाष्ये एव दूषयति , न तु कुत्रापि वैष्ण-वाग्रेसरस्य तस्यावश्यनिराकर्तव्यं श्रीकण्ठभाष्यं स्पृशत्यपि । चन्द्रिका-व्याख्याता राघवेन्द्रतीर्थस्तु श्रीकण्ठभाष्यं सानुवादं दूषयति । अनेन श्रीकण्ठभाष्यं व्यासतीर्थानन्तरं , राघवेन्द्रतीर्थात्प्रागेव च निर्मितमिति करबदरायितम् । अयमेव च कालः दीक्षितस्यापीति अवधेयमेतत् (६७)

परमार्थविदस्तु—एवमस्य दीक्षितकालिकत्वात् तत्काले तत्तादृ-शस्य श्रीकण्ठनामकस्य कस्यचित् शैवाचार्यस्य ग्रन्थशासनसम्प्रदाया-दिभिरनुपलब्ध्या , दीक्षितस्य श्रीवैष्णवाचार्येण पराजयस्य तन्मूल-वैष्णवद्वेषशैवपक्षपातादेः ऐतिहासिकसम्मतत्वाच्च दीक्षित एव श्रीकण्ठ-भाष्यकर्ता इति निरूपयन्ति (६९) ॥

प्रदर्शयन्ति चात्र ग्रान्थिकान्यपि प्रमाणानि—

(१) प्रकृते श्रीकण्ठभाष्ये कस्याप्यन्यस्य ग्रन्थस्य ग्रन्थकारस्य वा नामापि न स्मर्यते । इदं च तस्य भाष्यस्य कालेयत्ताज्ञानपरिहारायैव बुद्धिपूर्वकमेव कृतमिति सूत्रभाष्यप्रस्थानपरिशीलकानां सुज्ञेयम् । आदौ श्वेताचार्यनामस्मरणेऽपि तादृशस्य कस्यचिदाचार्यस्य सद्भावे प्रमाणमेव

नास्तीति सूर्यनारायणशास्त्र्यपि वदति। श्वेताचार्यः पौराणिकस्तु कश्चित् शिवपुराणदावुल्लिखितः। तस्य श्रीकण्ठाचार्यतामसंभावयित्वैव दीक्षितोऽपि अन्योपहासभीत्या श्रीकण्ठं हरदत्तानुयायिनमेव लालयति, न तु श्वेताचार्यशिष्यम्। इदं सर्वमस्य भाष्यस्य कुसृतित्वमावेदयति (६४-७७)

(२) मुख्यानां दीक्षितशैवग्रन्थानां अयं क्रमः, शिवतत्त्वविवेकः, शिवकर्णामृतं, शिवार्कमणिदीपिका, शिवाद्वैतनिर्णयः, शिवानन्दलहरी—इति तद्ग्रन्थेभ्य एवावगम्यते। तत्र आद्यग्रन्थद्वये 'शब्दादेव प्रमितः' इति सूत्रं प्रमाणयन्नपि, 'नारायणपरं ब्रह्म' इति श्रुतिं विचारयन्नपि श्रीकण्ठं तद्भाष्यं वा न स्मरत्यपि। प्रत्युत शिवकर्णामृते 'नारायणात् परं ब्रह्म' इति व्याख्या, पाशुपताधिकरणप्रतिक्षेप्याणां पाशुपतानां व्याख्या इति वदन् तत्पुरुषसमासार्थं ब्रह्मसूत्रानारूढमेव वदति। एवं तयोः हरदत्तमुल्लिखन्नपि—तदनुयायित्वेन स्वेनैवानन्तरग्रन्थेषु लालप्यमानं श्रीकण्ठं न स्मरत्यपि। अतश्चैतद्ग्रन्थद्वयानन्तरमेव श्रीकण्ठभाष्यकुसृतिरिति सिध्यति (७४)॥

ननु पूर्वमलाभादनुल्लेखः, अनन्तरं लाभादुल्लेख इति कुतो न स्यादिति चेत्—प्रमाणान्तरेण तस्य ग्रन्थस्य प्राचीनत्वे सिद्धे खल्विदं सुवचनम्। अपि च एवं तर्हि प्रामाणिकरीत्यैव श्रीकण्ठभाष्यं उदाहरणीयं; न तु परप्रतारणैकभावनया। तथा हि दीक्षित प्रामाणिकजुगुप्सितां रीतिमनुसरति—(१) अद्वैतिनः तस्य किमित्येतावान् विष्णुवैष्णवविद्वेषः, तन्मूलशिवतत्त्वविवेकादिरचनाग्रहश्च? (२) परस्परसमन्वयगन्धामात्रेऽपि श्रीकण्ठस्य शङ्कराचार्यस्य च ऐककण्ठसमर्थनप्रयास निरर्थैकफलकश्च कुतः? (३) विशिष्टाद्वैततत्वस्य श्रीवैष्णवकुलधनत्वं सम्यक् जानन्नपि प्रमाणलेशमपि अदर्शयन् 'श्रीरामानुजः श्रीकण्ठानुकारीति' विनैव निरयपातभयं कुतो निन्दति? (४) शिवार्कमणिदीपिकायां 'पूर्वाचार्यैः कलुषितम्' इति मूलं विवृण्वन् शङ्करभाष्यसमानरीतिकमेव श्रीभाष्यस्थलं द्वित्रं प्रदर्श्य तदेकमेव श्रीकण्ठप्रतिक्षेप्यं इति प्रकटनाग्रहः वैष्णवविद्वेषश्च कुतः? (५) एवं श्रीकण्ठभाष्यप्रतिक्षेप्यं श्रीभाष्यं प्रकटयन्नेव कथं निर्भय श्रीरामानुजं श्रीकण्ठानुकारिणं उपहसति? (६) 'श्रीभाष्यं नात्र विवक्षितं, अपि तु तस्य मार्गप्रदर्शकं तदाचार्यमतमेव" इत्यन्ते प्रलापनेन श्रीरामानुजस्य स्वाचार्यप्रद-

र्शितमार्गगामितां स्वयमेव वदन्नपि , तेन च श्रीकण्ठस्यैव स्वेनैव रामानुजचोरत्वे स्वयं प्रकटितेऽपि विना पापभीतिं कथं श्रीरामानुजं श्रीकण्ठानुकारिणं निन्दति (४१-४३)? (७) शैवागमानामनादिव्याख्यानपरंपरासिद्धमर्थं परित्यज्य नूतनतयैव श्रीकण्ठेन (स्वेन) इदं शैवमतं स्थापितमिति वदता तस्य (स्वस्य) रामानुजचोरत्वमवशं प्रकटयतापि 'श्रीरामानुजः श्रीकण्ठानुकारी' इत्युपालंभः कुतः? (८) शिवकर्णामृते-' नारायणात् परं ब्रह्मेति पाशुपतानां व्याख्या' इत्यभिधाय, उपास्योपासकाभेदाभिप्रायं हरदत्तनिर्वाहमेव सिद्धान्तमभिदधतः, शिवार्कमणिदीपिकायां हरदत्तवचनं प्रौढिवाद इति कथयत, पुनरपि तत्रैव ज्योतिरधिकरणे हरदत्तोक्तिमेव मुख्यं वदतः किमित्येवं वृथा मतिविभ्रमः? (७४) (९) हरदत्तश्रीकण्ठयोः पूर्वपश्चिमगामित्वेऽपि, श्रीकण्ठभाष्ये स्वस्य श्वेताचार्यशिष्यत्वस्य तेनैव ख्यापनेऽपि किमित्ययं दीक्षितः श्रीकण्ठं हरदत्तानुयायिनं प्रतारयति?

एवं स्थलीपुलकन्यायेन प्रदर्शिता दीक्षितस्याप्रामाणितमता। तदीयसर्वग्रन्थानां परिशीलने तु मया प्रदर्शितमतिस्वल्पमेव भयात् निर्मत्सराणाम् ॥

एतदुपरि अद्यतनान् आत्मानमद्वैतित्वेन शङ्कराचार्यभक्तत्वेन च ख्यापयतः पृच्छामः। (१) वाचाऽद्वैतमालपतामपि युष्माकं किमिति शैवपक्षपातः? विष्णुवैष्णवविद्वेषश्च? (२) सुस्पष्टं शङ्कराचार्यं बहुषु स्थलेषु खण्डयन्तं (७९) दीक्षितमुपलालयतां युष्माकं मुधा शैवाग्रह शङ्कराचार्यविद्रोहश्चैव प्रकटीकृतो न भवेद्वा? (३) अप्पयदीक्षितभ्रातुः आच्चान् दीक्षितस्य पौत्रेण नीलकण्ठदीक्षितेनैव अप्पयदीक्षितस्य श्रीकण्ठमतप्रतिष्ठापकाचार्यत्वे मुक्तकण्ठ शतश उद्घोषिते, अद्यतना अद्वैतिनः भवन्तः तदेतदपह्नुवानाः तं अद्वैतविद्याप्रतिष्ठापकाचार्यत्वेन कुतः लालयन्ति? (४) इद श्रीकण्ठभाष्यं परकीयपुत्रवदेव विलोकयति शैवलोके किमित्यद्वैतिनंमन्या भवन्तः पाठप्रवचनादिष्विदमत्यादरेणावतंसयन्ति? (५) वन्ध्यापुत्रायमाणं श्रीकण्ठं किमिति भवन्तोऽद्वैतिनंमन्याः श्रीशङ्कराचार्यतोप्यतिशयेन पुरस्कुर्वन्ति? (शिवार्कमणिदीपिकाभूमिका विलोकनीया)। (६) पुरुषोत्तमप्रभृतिषु श्रीकण्ठं रामानुजचोरमुद्घोषयत्स्वपि, शैवलोक एव तूष्णीं भावमाश्रिते किमिति भवतामद्वैतिनंमन्यानां रामानु-

जस्य श्रीकण्ठानुकरणसाधने उत्साहः? परिश्रमो वा? किं तेन शाङ्करमतं प्रतिष्ठापितमिच्छन्ति? उत साधुजननिन्दाचापल्यमात्रमासुरसुलभम्? द्वितीयमेवात्र निदानं भवितुमर्हति। न हि विष्णुवैष्णवनिन्दा, श्रीकण्ठभाष्याक्वतंसनिन्यादिकं कामक्रोधलोभेभ्यो विनाऽन्येन हेतुना शाङ्कराणां युज्यते! वदति च भगवान् 'त्रिविधं नरकस्येदं द्वारं मोहनमात्मनः। कामः क्रोधः तथा लोभः' इति॥

अतः विशुद्धान् शाङ्करान् प्रणिपत्य प्रार्थयामः—न युक्ता भवतां श्रीशङ्कराचार्यखण्डकेन शुद्धशैवेन दीक्षितेन मैत्री। यदि दीक्षितपरित्यागे अभिमानो बाधते, तर्हि धैर्येण आत्मानं शैवं प्रकटयन्तु, न तु अद्वैतिनं शङ्कराचार्यभक्तं वा। भोः शाङ्करमतीयपण्डिताः! विषयं सर्वं जानतां युष्माकं अपथे गमनं, स्वपरप्रतारणादिकं वा किं युक्तम्? वैष्णवाभासाः केचित् बुद्धिदोषात् शिवं निन्देयुश्चेत्, अद्वैतिनां भवतां तत्प्रतीकारतया विष्णुनिन्दनं कथं बुद्धिदौर्बल्यं नावेदयेत्? 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः'। अतः परैः प्रोद्वेजितैरपि अपथे गमनं अपुंस्त्वमेव खलु प्रकटयेत्। एतादृशानां कथं वाऽध्यात्मचिन्तायां अधिकारः? धीराणामेव खलु तत्राधिकारः? अतः यदि यूयं शाङ्करा अद्वैतिनश्च तर्हि दीक्षितमैत्री, तन्मूलकशैवपक्षपातः तन्मूलकविष्णुवैष्णवनिन्दा च दूरतः परिवर्जनीयैव॥

ननु हरिहराद्वैतभूषणादिषु दीक्षितस्य विष्णुनिन्दा शिवपक्षपातश्च औपाधिक एवेत्युक्तमिति चेत्, करणत्रयैरपीदं अङ्गीक्रियते चेत्; साधितं आत्मनो हितम्; किन्तु वैपरीत्यमेव दृश्यते प्रत्यक्षतः। अन्ततस्तु अत्यल्पोपाधिनाऽप्रामाणिकतमे मार्गे गतः, शङ्कराचार्यदूषकश्च दीक्षितः शाङ्करैः सर्वथा परित्याज्य एव (८५)॥

भो भो निर्मत्सराः विद्वांसः! रागद्वेषमुधाऽऽग्रहादिभिः तत्तादृशा अपि अप्रामाणिकमार्गमवलम्ब्य ग्रन्थान् व्यरचयंश्चेत्—को वा विश्वसनीयः? को वा न? इति भ्रमेदेव मतिः सामान्यजनानाम्। हन्त! कति वा एवं प्रतारिताः? एवं प्रतारणपरंपरायाः संवर्धनं किं युज्यते? इत्यादिकं सञ्चिन्तयन्तु!

अयि ब्रह्ममुखजाताः द्विजतल्लजाः ! विमृशन्तु सर्वेऽपि अन्ततः सारतो वक्ष्यमाणं , निर्मत्सरं स्वस्वहृदयसाक्षिकम् !

'नैकोऽपि विषयः तर्केणैव केवलं निर्णेतुं शक्यते ' इति सर्वसंप्रतिपन्नम् । 'तर्काप्रतिष्ठानात्' इति हि घोषयति ब्रह्मसूत्रम् । केवलतर्कावलम्बनात् हैतुकत्वेन निन्द्यन्ते स्म वैदिका इति प्रथितमेव ॥

मधुररसानभिज्ञेन केनचित् 'माधुर्यं नाम किम् ? ' इति प्रश्ने , इक्षुक्षीरादिनिदर्शनपुरस्सरं परैर्दीयमानस्य विषयपरिचयस्य , स्वयमिक्षुक्षीरादिसेवनया संपाद्यमानस्य विषयपरिचयस्य च अन्तरं कियदिति सावधानं चिन्त्यताम् । स्वयमनुभवेन जायमानः योऽयं विषयपरिचयः स कथं नाम कोटिशैरपि वाग्जालैः संपादयितुं शक्यः ? अतिस्थूलभौतिकक्षेत्रविषयपरिचय एव एवं अनुभवैकशरण , केवलतर्कैः स्प्रष्टुमप्यशक्यः वर्तते चेत्—अत्यन्तसूक्ष्म शिवविष्ण्वादिदेवतापरिचयः—ब्रह्मपरिचयो वा—केवलशब्दसाध्यः , तर्केण सुसंपाद्यो वा कथं नाम स्यादिति चिन्त्यताम् ! 'नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन ' ॥

सति चैवं वस्तुतत्त्वे परमगंभीरे—इदानीन्तनाः पण्डितंमन्या केचन वयं पुनःपुनः केवलतर्कावलम्बनेनैव साग्रहं शिवविष्णुपारम्यसाधने , अद्वैतविशिष्टाद्वैतादिसाधने वा प्रवर्तामहे खलु ! इमं क्रमं शास्त्रमनुमनुते वा ? अनेन विषयो वा निर्विवादं निर्णीयेत वा ? उपनिषदाद्यर्थविचाराय क्रियमाणः क्लेशः सर्वोऽपि प्रकारान्तरेण ऊहापोहात्मकतर्क एव विश्रान्त इति अस्मदीयो विचारः सर्वोऽपि 'तर्काप्रतिष्ठानात्' इति सूत्रेण कथं नाम न क्रोडीक्रियेत ? चिन्त्यतां निर्मत्सरम् !

कस्मिंश्चिद्ग्रामे ग्रामीणविवादेभ्यो दूरः उपशान्तः कश्चित्साधुरासीत् । तत्रत्याः शैवा वैष्णवाश्च परस्परं कलहायमानाः माध्यस्थ्याय तत्समीपमगमन् । उभावपि साधुं तं स्वपक्षीयं मन्यमानौ स्वस्वपक्षं महता वाग्जालेनोपपादितवन्तौ । सर्वं तत् श्रुत्वा स साधुः 'नास्मिन् विषयेऽहं किञ्चिदपि वक्तुं प्रभवामि , यतोऽहं शिवमपि न दृष्टवान् , न वा विष्णुम्' इत्यवददिति । गंभीरा प्रामाणिकी चेयं कथा पर्यालोडनीया ॥

अतः कञ्चनपक्षं साधयितुं बद्धकच्छा वयं प्रथमं शिवं विष्णुं वा द्रष्टुं प्रयतेमहि ! स्वानुभवेनैव निर्णेष्यामः तत्त्वम् । तत्पर्यन्तं सर्वमाग्रहादिकं

संत्यज्य तत्त्वदर्शनैकदृष्टयो भवेम। तदुपायमन्विष्यामः। 'प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्राद्वाऽपि नीचादभीक्ष्णम्' इति आर्षीमाज्ञामेवानुसराम ! अत्यल्पख्यातिलाभाद्यर्थं आत्मद्रोहिणो मा भवामः ! केवलशब्दजालप्रसारेण कालं न यापयाम ! क्रियायामेवावतराम !

'इदं सर्वं सम्भवि वाऽद्य' इति संशयं परित्यज्य, 'आश्रितवात्सल्यैकजलधिः अकिञ्चनशरणः दयामहोदधिः भगवान् अद्य वा कुत्र गतः?' इति धैर्येण सत्यदर्शनार्थं योत्स्यामः। 'नायमात्मा बलहीनेन लभ्य'। त्यज्यतां दूरतः क्लैब्यम्! 'अस्तीत्येवोपलब्धव्यः तत्त्वभावेन चोभयोः। अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति'; इदमेव दृढतममास्तिक्यं, यत् तदुपलब्धावेव विश्रम्येत ॥

'आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारयणं
लोकस्य व्यसनापनोदनकरः दासस्य किं न क्षमः'

तादृशी निष्ठा किमस्त्यस्माकमिति पुनरपि क्लैब्यं माऽऽश्रीयताम्। यदि नास्ति तादृशी निष्ठा 'तामपि देहि' इति तमेव शरणमुपगच्छामः। आश्रितजनपारिजातः खलु स भगवान् ॥

यदि नाम वस्तुत सत्यं निर्णेयमिति अस्माकं भावः हार्द—तदा उपर्युक्त एवोपायः आश्रयणीयः। इदं सर्वं परित्यज्य केवलवादादिभिः न किञ्चिदपि कदाऽपि साधयितुं शक्यमिति न कदाऽपि विस्मर्तव्यम् ॥

'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते
तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति ।
यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति सकृपणोऽथ
य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः' ॥
'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः'

अत्र सर्वत्रोक्तं वेदनं किं ग्रन्थपठनरूपम्? उतान्यत्? इति चिन्त्यताम्!

'उत्तिष्ठत! मा स्वपत!!'



॥ श्रीलक्ष्मीहयवदनलक्ष्मीनारायणाभ्यां नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# श्रीकण्ठसमालोचनम्



विश्वं सृजन् करुणया परिपालयन् यो
विश्वक्रियासु यमयत्यखिलान्तरात्मा ।
विद्यास्वयंवरपतिर्विदधातु सोऽयं
विश्वस्य मङ्गलममेयमहाविभूतिः ॥

नव्यश्रीरङ्गनाथाभिधकलिमथनान् सर्वतन्त्रस्वतन्त्रान्
तच्छिष्यान् दीक्षितार्यानपि पितृचरणान् सुन्दरार्यान् प्रणम्य ।
वक्ष्ये तेषां गुरूणामनवधिकरुणानुग्रहैकावलंबात्
निर्मन्थ्यानेककोशान् सकलबुधहितं तत्त्वमेतद्यथावत् ॥

गुरुप्रसदनस्फुरद्गुणगरिम्णि यन्मानसे
सकृत् स्फुरति वस्तु तन्न च किमप्यपभ्रश्यति ।
ऋषिस्तदितरोऽपि वा यदि गृणाति गत्यन्तरं
विकल्प्य तदपि क्षणात् विलयमभ्युपैति स्वयम् ॥

इत्थं त्र्यन्तविद्यागुरुवरकथितं तत्त्वमेतद्यथावत्
सन्तः पश्यन्त्वभिज्ञाश्शुभगुणनिधयो नित्यशुद्धान्तरङ्गाः ।
कामं जल्पन्तु दैत्या निरवधिकगुणब्रह्मविद्वेषदुष्टाः
का चिन्ता मादृशानां गुरुपदकमलभ्रान्तहृद्भृङ्गराजाम् ॥

शैवं वा वैष्णवं वा मतमिह मनुजास्संश्रयन्तां यथेष्टं
नास्माकं कापि हानिः परमिह तु हितं तत्त्वमेतद्वदामः ।
माऽऽत्मद्रोहे यतन्तां निरवधिनिरयप्रापके मौर्ख्यभावात्
मा स्वैराचारसक्ता वदत निजमते मानमाचार्यवर्गान् ॥

नेयं कृतिर्वैष्णवतोषणाय न चापि शैवादिनिरासनाय ।
किन्तु प्रमोदाय भवेद्धि तेषां येऽद्वैतिनः शङ्करपादभक्ताः ॥

योऽप्पयः शङ्कराचार्यं शैवं शैवाग्रणीर्जगौ ।
अद्वैतिनां तु तन्मैत्री कथं युक्तेति चिन्त्यताम् ॥

कालेऽस्मिन् विपुले हि निर्मलमना निर्मत्सरः पण्डितः
कश्चित्स्यात्तु विवेकवान् दृढमतिः श्रीशङ्करार्यप्रियः ।
तत्तादृक्पुरुषस्य दर्शनपथं संप्राप्य सेयं कृतिः
कुर्याच्चेच्च मुदं च सत्परिणतिं धन्योऽस्म्यहं तावता ॥

न दूषयामोऽत्र च लेशतोऽपि किञ्चिन्मतं कञ्चन वा मतीयम् ।
अद्वैतिनां विष्णुविनिन्दकेन मैत्री न युक्तेति परं वदामः ॥

दासं मामादिशन् ये त्वनवधिकरुणापूरपूर्णान्तरङ्गाः
नव्यश्रीरङ्गनाथाभिधकलिमथना मत्सरादेर्विदूराः ।
तेषां वाणीसुधास्वादनविसृमरप्रज्ञ एतत्तनोति
श्रीकण्ठादेस्समालोचनमखिलबुधश्लाघ्यमव्याहतञ्च ॥

[उपोद्घातः]

अथ भगवान् स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदः परमपुरुषः सर्वशेषी तत्त्वनिर्णयैकप्रयोजनमिदं प्रकरणं स्वशेषभूतेनानेनात्मना स्वस्मै स्वप्रीतये स्वयमेव कारयति ॥

अत्रेत्थं विप्रतिपद्यन्ते—

श्रीभाष्यकाराः श्रीमद्रामानुजार्याः श्रीकण्ठभाष्यकृतः श्रीकण्ठशिवाचार्यादत्यन्तं प्राचीना इत्येके ।

श्रीकण्ठशिवाचार्य एव श्रीमद्रामानुजाचार्यापेक्षया प्राचीन इत्यपरे । किमत्र तत्त्वमिति विचारयाम ॥

ननु— किन्नु साध्यमिह विप्र तेऽमुना काकदन्तपरिचिन्तयाऽनया ।
नेव काकरदनापरीक्षणं दन्तिदन्तपरिचिन्तनं त्विदम् ॥

किं प्रयोजनं तर्हीदं प्रकरणम् ?

अये भोः साधो ! प्रथममिदं वक्तव्यमायुष्मता, अस्मदुद्यमस्य नैष्फल्यापादनप्रयासेन भवतः किं साध्यमिति ?

व्यर्थे व्यापारे सार्थक्यभ्रान्तिनिरसनेन तत्परित्यज्य अन्यस्मिन् सार्थके भवन्तं प्रवर्तयितुमिति चेत्–अयि कृपालो! ममापि प्राचीने नवीनत्वभ्रान्तेः नवीने प्राचीनत्वभ्रान्तेश्चापनोदनेन प्राचीनं पक्षं सर्वेऽप्युपाददीरन्निति किं न सार्थः परिश्रमः? इति चिन्तय ॥

ननु प्रत्नत्वमात्रेण न विश्वासो भवेन्नृणाम् ।
वृद्धोऽपि गर्दभो नैव पूज्यते चेतनावता ॥

सत्यं, प्रत्नत्वमात्रेण न विश्वासो मयोच्यते ।
भाष्ययोरनयोरस्ति विशेषस्तं न पश्यसि! ॥

अनुकार्यानुकर्तृत्वे दृश्येते भाष्यकारयो ।
कोऽनुकार्योऽनुकर्ता कः? इत्येवं परिशील्यते ॥

ननु, नैतावता किञ्चित्साधीय इह विद्यते ।
तद्दृष्ट्वाऽन्यस्य करणादप्रमाणं भवेत्तु किम्? ॥

मृदुमतिः खलु भवान् क्लेशेन प्रतिबोधनीयो दृश्यते!

लोके वक्तृगुणाधीनः शब्दे प्रामाण्यनिश्चयः ।
कथं विश्वसनीयः स्यात् स्वबुद्धिरहितो जडः ॥

श्रीमद्रामानुजार्यो यदि पुनरलिखत् स्वीयभाष्यं नवीनं
दृष्ट्वा श्रीकण्ठभाष्यं त्वनवहिति कथं ते तु विस्रंभयोग्याः ।
एवं श्रीकण्ठशैवो यदि पुनरलिखत् स्वीयभाष्यं नवीनं
श्रीमद्भाष्यानुसारादिति खलु स भवेन्नैव विश्वासयोग्यः ॥

ननु भाष्ययोरेकरूप्यादर्थैकरूप्यमपि सिद्धम् । ततश्च विस्रंभयोग्यो यो वा को वा भवतु! का हानिः?

न विशेषज्ञो देवानांप्रियः—

समानं हि चतुष्पात्त्वं दृश्यते गर्दभाश्वयोः ।
नैतावताश्वमाहर्तुं आहरेद्गर्दभं नरः ॥

भाष्यद्वये यद्यपि भाष्यकृद्भ्यामुक्तं विशिष्टाद्वयमेव तत्त्वम् ।
परन्तु नारायणमेव तत्त्वं रामानुजार्याः, शिवमाहुरन्ये ॥

हन्त! तर्हि शैववैष्णवकलहोऽयं! अत्यन्तमुद्विग्नाः स्मः एतादृशैः शैववैष्णवकलहैः परदगतै —

मोद्विग्ना भवत ! नात्र किञ्चिदपि शैववैष्णवकलहः प्रस्तूयते। किन्तु अनयोर्भाष्यकारयो क निरतिशयमतिविभववशीकृतसर्वजनान्तरंग साक्षात्कृतपरतत्त्व ? यं चान्यः भाष्यकार स्वबुद्धिरहित अनुकरोतीति विचारयामः ॥

उत्तमस्त्वनुकार्यः स्यात् न तु नैवाधमः क्वचित् ।
वञ्चकस्सज्जनं लोकेऽनुकरोतीति हि श्रुतम् ॥
यदाऽनुकार्यः श्रीकण्ठ स तु श्रेष्ठो भविष्यति ।
लक्ष्मणार्योऽनुकार्यश्चेत् स तु श्रेष्ठो भविष्यति ॥
अनुकार्यानुकर्तृत्त्वे निर्णेये कालनिर्णयात् ।
युक्तः परिश्रमस्तस्मादेनयो. कालनिर्णये ॥
एवञ्च पूर्वं यदि लक्ष्मणार्यास्त एव चाता भुवि सज्जनानाम् ।
श्रीकण्ठशैवो यदि पूर्वकालिक. स एव चातो भुवि सज्जनानाम् ॥
तथा च शब्दप्रामाण्यहेतुवक्तृगुणव्रजः ।
किन्निष्ठ इति चिन्तेयं युज्यते तत्त्वकांक्षिणाम् ॥

ननु भोः ? किमिदं आढकानुद्धृष्य माषान् विक्रीणीषे ? प्रतिज्ञातं हि अद्वैतिनां प्रमोदाय भवेदियं कृतिरिति । न जानीमः कुतस्तेषां प्रमोदः प्रकृतचिन्तयेति ।

अवदधातु भवान्—सकलजगद्विदितमेवैतत् निर्विशेषाद्वैतवादे शांकरपरिपोषिते हरीहराद्वैतमेव परमार्थतस्तत्त्वमिति । साधितं चतत् हरिहराद्वैतभूषणादिषु बोधेन्द्रसरस्वतीप्रभृतिभिः ॥

एवं व्यवहारदशायामुपास्यं सविशेषं ब्रह्म श्रीमन्नारायण एवेति श्रीशङ्कराचार्यसम्मतमित्यपि सकलजगद्विदितम । समर्थितं चैतदपि श्रीशङ्करानुयायिभिरेव महामहोपाध्यायरामसुब्रह्मण्यशास्त्रिप्रभृतिभिः विष्णुतत्त्वरहस्यानुभाष्यगांभीर्यादिषु । निरूपयिष्यते चैतत्स्वावसरे प्रमाणम् ॥

सति चैवं वस्तुतत्त्वे हन्त ! दैववञ्चिताः केचन आत्मानमद्वैतिनं श्रीशङ्कराचार्यभक्तं च ख्यापयन्तोऽपि विष्णुवैष्णवविद्वेषज्वलनज्वलितमनसः वीरशैवा दरीदृश्यन्ते इति न तिरोहितं चक्षुष्मतां, मतिमतां च । तदिदं कस्य हेतो ? कदा प्रभृति ? केन वैते प्रतारिताः ? इति कुतूहलिनस्सन्तै विमर्शविचक्षणा ॥

एवं विमृशतां तत्त्वमिदं ज्ञायेत निश्चितम् ।
नापराध्यति य कश्चिदत्रान्यो दीक्षितादिति ॥
निरूपयामोऽत्र हि दीक्षितस्य विष्णौ तदीयेषु च वैरिभावम् ।
शैवेषु मैत्रीमपि शङ्करार्यप्रतीपगामित्वमपि प्रमाणैः ॥

तत्रेदं प्रथमं प्रमाणं—यदयमप्पयः श्रीकण्ठशिवादतिप्राचीनत्वेन प्रामाणिकपरिगणितानपि श्रीमद्रामानुजाचार्यान् वैष्णवविद्वेषविमूढमना केवलं श्रीकण्ठानुवर्तिनः प्रकटयति निस्संकोचमिति प्रामाणिकजनानां स्मरणेपि जुगुप्सावहमेव ॥

अतश्च प्रकृतार्थपरिशीलनया अस्याप्पयदीक्षितस्य निर्निमित्तविष्णु-वैष्णवविद्वेषशीलता, स्वरूपविरुद्धशैवसौहार्दशालिता, श्रीशङ्कराचार्याशयप्रतिक्षेपकाग्रगण्यता, प्रामाणिकजनमध्यगणनानर्हता, स्वपरघातुकता, विशुद्धैः शङ्करभक्तैः दूरेकरणीयता इत्यादिकं स्पष्टमवगम्येति युक्तमुक्तं 'अद्वैतिनां प्रमोदाय भवेदियं कृतिः' इति ॥

परन्त्विदमत्र न कदापि विस्मर्तव्यम्—

न दूषयामोऽत्र तु लेशतोऽपि किञ्चिन्मतं कञ्चन वा मनुष्यम् ।
अद्वैतिनामप्पयदीक्षितेऽस्मिन् मैत्री न युक्तेति परं वदामः ॥
संप्रार्थयामः प्रणतेन मूर्ध्ना त्वद्वैतिनः शङ्करपादभक्तान् ।
शुद्धेन भावेन विलोकयन्तु तथाऽनुगृह्णन्तु परिश्रमं मे ॥

[ग्रन्थोपक्षेप]

शैवास्त्वप्पयदीक्षितास्तदनुयायिनश्च श्रीकण्ठशिवाचार्यमेव श्रीमद्रामानुजाचार्यात्प्राचीनमभिमन्यन्ते । तथा हि वदति दीक्षित वादनक्षत्रमालायां हिसिधात्वर्थवादे 'रामानुजीयास्तु श्रीकण्टाचार्यापातप्रतीतिमवलम्बमानाः' इति । आनन्दलहर्या—'श्रीकण्ठाचार्यभाष्योल्लयत्कृतिसरणि क्वापि भाष्ये परेषां प्रायोदृष्टा' (श्लो-57) इति । तेनैव तद्व्याख्यायां चन्द्रिकायां अयं श्लोकखण्डः रामानुजभाष्यं कटाक्षयतीति स्पष्टमुक्तम् ॥

पुरुषोत्तमप्रभृतयस्तु वल्लभवैष्णवा रामानुजभाष्यमेव श्रीकण्ठभाष्यात्प्राचीनं संगिरन्ते । तथा हि पुरुषोत्तमः स्वीयब्रह्मसूत्रभाष्यव्याख्याने 'शैवस्तु रामानुजमतस्यैव चौरः' इत्यसकृदभ्यधात् ॥

एवं गिरिधरोपि स्वीयशुद्धाद्वैतमार्ताण्डे 'शैवोऽप्येतेन विध्वस्तः यतस्तच्चोर एव हि' (श्लो-63) इत्यवोचत् ; रामकृष्णभट्टश्च 'एवं रामानुजमतं दूषयित्वा तत्तस्करमतखण्डनमाह—तच्चोरः—रामानुजमतचोरः' इति व्याचख्यौ ॥

[पूर्वपक्ष]

तत्र शैवानां दीक्षितप्रभृतीनां अयमाशयः—न केवलमभिमानेन श्रीकण्ठशिवाचार्यं रामानुजाचार्यात्प्राचीनं वदामः । किन्तु—

(१) माधवाचार्यविरचिते शङ्करविजये पञ्चदशसर्गे—

'तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादयन्तमेनम् ।
हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं संगिरते स नीलकण्ठम् ॥' इत्युपक्रम्य—'विजितो यतिभूभृता स शैवस्सह गर्वेण विसृज्य च स्वभाष्यम् ।
शरणं प्रतिपेदिवान्महर्षिं हरदत्तप्रमुखैस्सहात्मशिष्यैः'

इति विस्तरेण नीलकण्ठनामा शैवः शङ्कराचार्यैर्निर्जित इत्यवर्णि । स चायं नीलकण्ठः ब्रह्मसूत्रभाष्यकर्ता चासीदिति तत्रैव 'शिवतत्परसूत्रभाष्यकर्ता' इति 'विसृज्य च स्वभाष्यं' इति कथनादवगम्यते । श्रीकण्ठस्यैव नीलकण्ठपदेन व्यवहारः उपलभ्यते । वैष्णवधुरीणो महाचार्योऽप्येनं भाष्यकारं नीलकण्ठनाम्नैव निर्दिशति ।

एवञ्च श्रीकण्ठाचार्यस्य शङ्कराचार्यसमानकालिकत्वसिद्ध्या रामानुजाचार्यात्प्राचीनत्वं कैमुतिकसिद्धम् ॥

(२) एवं तत्रैव शङ्करविजये पूर्वोदाहृतश्लोकेषु अस्य नीलकण्ठस्य हरदत्तगुरुत्वमप्यभिहितम् । हरदत्तश्च कलेः 3979 तमे विळंबिवत्सरे पुष्यशुक्लपञ्चम्यां दिवं गत इति भविष्योत्तरपुराणादवगम्यते । स चायं कालः क्रैस्त 878 तमवत्सरपरिमितः । ततश्च हरदत्तगुरोः नीलकण्ठस्य कालस्ततः पूर्वमेव वाच्यः । रामानुजाचार्यास्तु क्रैस्तैकादशशतकारंभे आसन्निति सर्वसंप्रतिपन्नम् ॥

(३) भास्कराचार्यैः प्रणीते ब्रह्मसूत्रभाष्ये 'सुखविशिष्टाभिधानादेव च' (1-2-15) इति सूत्रव्याख्यानावसरे 'अत्रावसरे अत एव तद्ब्रह्म इति सूत्रं अन्ये पठन्ति, तत्पुनर्गतार्थमित्यन्यैर्नाधीयते' इति दृश्यते ।

अत्रानुदितं भाष्यं कस्येति विमर्शनीयम् । तच्च सूत्रं शङ्करभाष्ये न पश्यामः । श्रीकण्ठरामानुजभाष्ययोः परमिदं सूत्रं दृश्यते । तत्र च रामानुजाचार्यस्य भास्करानन्तरकालिकत्वं सर्वसंप्रतिपन्नम् । परिशेषादिदं भास्करभाष्यं श्रीकण्ठभाष्यमेव कटाक्षयतीति सिद्धम् । तथा च श्रीकण्ठस्य भास्करादपि प्राचीनत्वसिद्ध्या रामानुजाचार्यात्प्राचीनत्वं कैमुतिकसिद्धम् ॥

(४) किं बहुना! रामानुजाचार्या एव श्रीकण्ठमतमनूद्य खण्डयन्ति । यथा वेदार्थसंग्रहे 'यद्यपि चेदं विरुद्धमिव दृश्यते' इत्युपक्रम्य शिवपारम्यपरोपनिषद्वचनान्युदाहृत्य तेषां नारायणः परं ब्रह्मेति सिद्धान्ते विरुद्धतामाशङ्क्य 'अत्यल्पमेतत्' इत्यादिना पर्यहारि । अत्र निरस्यमानः पक्ष शिवपारम्यवादिनः श्रीकण्ठस्यैव ॥

एवं तत्रैव "यत्पुनरिदमाशंकितं 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम्' इत्याकाशशब्देन जगदुपादानकारणं प्रतिपाद्य तदन्तर्वर्तिनः कस्यचित् तत्त्वविशेषस्यान्वेष्टव्यता प्रतिपाद्यते आकाशपर्यायभूतात्पुरुषादन्यस्यान्वेष्टव्यतयोपास्यत्वं प्रतीयत इति ; अनधीतवेदानामदृष्टशास्त्रविदामिदं चोद्यम्' इत्यभ्यधायि । अत्रापि निरस्यमान पक्षः श्रीकण्ठस्यैव । पुरुषशब्दवाच्यनारायणादन्यस्य हि शिवस्य उपास्यत्वं तत्सम्मतं, एव पुरुषशब्दवाच्यश्च नारायण उपादानमिति च । तथा च दहराकाशातिरिक्तपरमात्मोपासनवादी श्रीकण्ठः । अयमेव च व्योमातीतवादः । उक्तवेदार्थसंग्रहस्य व्योमातीतवादनिरसनपरत्वं तद्व्याख्यायां तात्पर्यचन्द्रिकायां सुदर्शनार्यैः स्पष्टमुद्घोषितम् । उत्तरत्रापि 'तदेतस्मान्निखिलजगन्निमित्तोपादानभूतात्' इत्यादिवेदार्थसंग्रहावतरणावसरे सुदर्शनसूरिः नारायण उपादानं, रुद्रो निमित्तमिति मतं पूर्वमेव निरस्तमिति अवोचत् । अतश्च उक्तवेदार्थसंग्रहभागः श्रीकण्ठमतप्रतिक्षेपपर एव ॥

एवं श्रीभाष्यमङ्गळश्लोकव्याख्यानावसरे श्रुतप्रकाशिकायां ईश्वर एव ब्रह्म, स त्रिमूर्त्यतिरिक्तस्सदा शिवः, ब्रह्मादयस्त्रयोऽप्यनीश्वराः इति पक्षः भाष्यस्थश्रीनिवासपदेन व्युदस्त इत्युक्तम् । अत्रापि निरस्तः पक्षः श्रीकण्ठस्यैव ॥

एवं बहुभिः प्रमाणैः रामानुजाचार्यापेक्षया श्रीकण्ठस्य प्राचीनत्वे सिद्धे स्वनस्मिद्धं रामानुजः श्रीकण्ठभाष्यानुकारीति ॥

एवं प्रमाणैरसौ लक्ष्मणार्यः श्रीकण्ठभाष्यानुकारीति सिद्धम् ।
ज्ञात्वा च तत्त्वं समाधाय चित्तं मास्मासु कोपं वृथा दर्शय त्वम् ॥

अतश्चशब्दप्रामाण्यहेतुवक्तृगुणव्रजः ।
श्रीकण्ठ एव निर्णीतः स एवाप्ततमो मतः ॥

एवं प्रमाणनिचयप्रथितेऽपि तत्त्वे
श्रीकण्ठमाह पुरुषोत्तम इत्यभिख्यः ।
रामानुजार्यमतचोरमतीवधाष्टर्यात्,
कामं ब्रवीतु स तु वैष्णवपक्षपाती ॥

[सिद्धान्तः]

अत्र प्रतिविधीयते—प्रतिविधाने चात्र चत्वारः प्रकाराः—

प्रथम —पूर्वपक्षयुक्तीनामसाधकत्वस्थापनम् , द्वितीयः तत्र बाधकप्रमाणवर्णनं , तृतीयः श्रीकण्ठभाष्यस्य श्रीभाष्यादर्वाचीनत्वसाधकप्रमाणोपन्यास , चतुर्थश्च वास्तविकश्रीकण्ठभाष्यकालनिर्णय इति ॥

तत्र न तावदभिहितानि प्रमाणानि स्वार्थसाधनसमर्थानि । यदिदमुक्तं माधवीयशङ्करविजयः तत्र प्रमाणमिति—तत् मिथ्यावृत्तस्य कूटसाक्षिसाहाय्यानयनम् । माधवीयशङ्करविजयो हि ऐतिहासिकांशे न सर्वथा प्रमाणीभवितुमर्हतीति सर्वेषामपि विमर्शकानां अविचाल्यो निर्णयः ॥

तत्र हि शङ्कराचार्येभ्य अर्वाचीनत्वेन सर्वसंप्रतिपन्नानां उदयन (श्लो-72) भास्कर (140) अभिनवगुप्त (158) प्रभृतीनां बहूनां शङ्कराचार्यैः पराजयोऽवर्णि । किं बहुना ! रामानुजाचार्यादप्यर्वाचीनं द्वादशशतककालिकत्वेन सर्वसंप्रतिपन्नं खण्डनकारमपि (श्लो-157) शङ्करपराजितं वर्णयदिदं काव्यं ऐतिहासिकांशे न सर्वथाप्रमाणीभवितुमर्हतीति नाधिकं वक्तव्यम् ॥

यद्यपि कश्चिद्दुराग्रही शैवाग्रेसरो ब्रूयादपि—' सत्यं बहूनि वैपरीत्यानि शङ्करविजये वर्तन्त एव । पर तु रामानुजार्य शङ्कराचार्येण परा जित इत्यनुक्त्वा नीलकण्ठः पराजित इति कथनात् रामानुजाचार्यः

श्रीकण्ठान्नवीन इत्यस्मिन्नंशे परमिदं प्रमाणीभवितुमर्हतीति—
अहो दुराग्रहिणो जीवनप्रत्याशा कुशकाशावलंबनेन !

अभिनिवेशवशीकृतचेतसां बहुविदामपि संभवति भ्रम ।
इति वदन्त्यपि शब्दपुरस्सरं किमिह वाच्यमितोऽप्यधिकं सताम् ॥

किमिदमत्र मेधाविनस्सम्मतम् ? किं शङ्करविजयानुल्लेखनान्नवीनत्वमिति तर्हि कणादगौतमजैमिनिप्रभृतयोपि रामानुजाचार्यवदेव शङ्करविजयानुल्लिखिता किं शङ्कराचार्यादर्वाचीनाः ? किं वा शङ्करार्यपराजितत्वेन तत्र वर्णिता उदयनश्रीहर्षादय. श्रीकण्ठवदेव शङ्कराचार्यात्प्राचीनाः ? एवमुभयथापि व्यभिचारात् शङ्करविजयोल्लेखनमात्रात् न श्रीकण्ठस्य श्रीमद्रामानुजार्यात्प्राचीनत्वसिद्धिरिति गृहाण !

ननु अविरुद्धे प्रकृते एकस्मिन्नर्थे तस्य प्रामाण्याङ्गीकारे किं बाधकमिति चेत्—

अयि भोः किमिदं श्रद्धावैकल्यं भवतोऽपि भवदीयाम्नायमूर्धन्ये शङ्करविजये । अविरुद्धांशे तस्य प्रामाण्यं वदता हि तस्य स्वप्रमाण्ये परमुखनिरीक्षकत्वेन स्वतः कस्मिन्नप्यंशे प्रामाण्यं नास्तीत्यभ्युपगतमेव ; एवं तत्र प्रमाणान्तरविरुद्धा अत एवाप्रामाणिका बहवो विषयास्सन्तीत्यपि ॥ ततश्च—सत्यं वदन्नपि सदः यदि जातु कश्चित्

ब्रूयादसत्यमवशात्स भवत्यनाप्त ।
नित्यं वदत्यनृतमेव तु बुद्धिपूर्वं
य , तं जनः क इह वश्यमतिः प्रतीयात् ॥

यत् प्रोक्तं माधवार्येण नीलकण्ठशिवं प्रति ।
वदामो बाधकं तत्र स्वावकाशे सुविस्तरम् ॥

अतश्च शङ्करविजये रामानुजार्यनामानुल्लिख्य नीलकण्ठनामोल्लेखमात्रात् न नीलकण्ठस्य रामानुजार्यात्प्राक्तनत्वं सिद्ध्येत् ॥

शङ्करविजये रामानुजार्यपराजयावर्णनादिबीजमपि दुराग्रहान्धस्त्वं अवगन्तुं न शक्नोषीति बोधयामोऽत्र भवन्तं वयमेव—अवधत्स्व ! माधवीयशङ्करविजयगमनिकां किं परिशीलयस्त्वम् ? रामानुजार्यादनन्तरकालिकं, अद्वैतसिद्धान्तस्थापनाचार्याग्रगण्यत्वेन इदानीन्तनैरद्वैतिभिः ! प्रशंस्यमानं खण्डनकारं श्रीहर्षमपि शङ्करपराजितं वर्णयन् अयं माधवः

न केवलं रामानुजार्यान् , अपि तु आनन्दतीर्थप्रभृतिष्वपि वैष्णवाचार्ये-*ष्वेकमपि शङ्करपराजितं न वर्णयामास । वर्णयामास तु विस्तरशो शैव-पराजयम् । तदेतत् कुत इति चक्षुः प्रसार्यतां आयुष्मन् !

'भुजयोरतितप्तशङ्खचक्राकृतिलोहाहितसंभृतव्रणाङ्काः ।
शरदण्डमहोदरोर्ध्वपुण्ड्राः तुलसीपर्णसनाथकर्णदेशाः ॥ (15-74)

शतशस्समवेत्य पाञ्चरात्रा अमृतं पञ्चभिदाविदां वदन्तः ।
मुनिशिष्यवरैरतिप्रगल्भैर्मृगराजैरिव कुञ्जरा प्रभग्ना ' ॥ (75)

इति श्लोकद्वयेनैव वैष्णवपराजयकथां समापयामास माधव । तत्रापि न कस्यापि वैष्णवाचार्यस्य नामापि जग्राह स । अपि चोक्त-श्लोकयोः विषया आनन्दतीर्थीया एव , न रामानुजीयाः । त एव खलु पञ्चभेदज्ञानस्य मुक्तिहेतुत्वं वदन्ति । 'पञ्चभेदांश्च विज्ञाय मुक्तिर्न चान्यथा ' (I-82) इत्यादिमहाभारततात्पर्यनिर्णयादाविदं व्यक्तम् ॥

एवं रामानुजीयपराजयवर्णन एव सङ्कुचन्ती तज्जिह्वा कथं नाम रामानुजार्यं शङ्करपराजितं वर्णयितुमुद्युञ्जीत ॥

तदनेन श्रीमद्वेदान्तदेशिकसमानकालिकस्य माधवस्य वैष्णवाचार्येषु विशेषतो रामानुजार्येषु गौरवातिशयोऽवगम्येत तटस्थैः । एवं च—

यस्मिन् देशे च काले कविकथकहरिस्सर्वतन्त्रस्वतन्त्र
वेदान्ताचार्यवर्यो यतिनृपतिमतं सर्वतस्स्थापयित्वा ।
रेजे निर्धूतसर्वप्रतिमतविबुधस्सर्वदा जागरूकः
तस्मिन् काले च देशे क इह यतिपतिं दूषयेत् प्राज्ञमानी ॥

अपि च—'यः प्राह शङ्करार्यस्य मातरं विष्णुलोकगाम् ।
न्यक्कृत्य शिवलोकं , स कथं निन्देत्तु वैष्णवम् ॥

\+ रामनाथेति शब्देऽस्मिन् षष्ठीतत्पुरुषार्थताम् ।
असहिष्णुर्विष्णुभक्त्या बहुव्रीहिं जगाद यः ॥

तस्य जिह्वा प्रवर्तेत प्रामाणिकशिरोमणेः ।
रामानुजार्यनिन्दोक्तौ कथं वैष्णवपुङ्गवे ?

---

*माधवीयशङ्करविजये—१४ तमसर्गे २९-५४ श्लोका द्रष्टव्याः ।

\+ " " " " १३४-१३६ श्लोका द्रष्टव्या. ॥

वस्तुतस्तु शङ्कराचार्यप्राशस्त्यप्रकटनैदंपर्येण प्रवृत्तस्य तच्छङ्करविजयस्य मीमांसकमते अर्थवादानामिव न स्वार्थे सर्वथा तात्पर्यमिति अनुपदमेव विशदयामः ॥

(२) एवमैतिहासिकांशे शङ्करविजयस्याप्रमाणत्वादेव हरदत्तगुरुत्वेनोत्कीर्तनादिकमपि व्याख्यातम् ॥

(३) भास्करभाष्ये श्रीकण्ठभाष्यमनूदितमिति कथनमपि आत्मवञ्चनं, परप्रतारणं वेति न जानीमः ॥

ननु तर्हि कस्येदं भाष्यमनूदितमिति चेत्—वयमत्रानुग्राह्या महात्मना तत्रभवता तत्त्वोपदेशेन । भास्करभाष्य एव—

(क) वैषम्यनैर्घृण्यसूत्रे (2-3-34) ः केचिदत्राधिकरणानुपयोगिनीं प्रमाणशून्यां प्रक्रियामारचयन्ति-अविद्यानिबन्धनोऽन्तर्यामिसर्गः, कर्मनिबन्धनो मनुष्यादिसर्ग इति—तदसत् '—इति,

(ख) संज्ञामूर्तिसूत्रे (2-4-20) 'अन्ये तु प्राधानिकानां सत्त्वरजस्तमसां यदि नामरूपव्याक्रिया स्यात्ततोऽपवर्गाभावः इति वर्णयन्ति—तदसत् ' इति,

(ग) सर्ववेदान्तप्रत्ययसूत्रे(3-3-1) 'अन्ये तु चोदनाशब्देन नियोग उच्यत इति नियोगमवतार्य वर्णयन्ति ' इति,

(घ) न च प्रकरणभेदादितिसूत्रे (3-3-7) 'यत्पुनरिह केचित् ' इत्यादि—

(ङ) सैव हि सूत्रे (3-3-38) 'ये पुनरिमां सत्यविद्यां ' इत्यादि,

(च) विहितत्वाच्चेति सूत्रे (3-4-32) ' केचित्त्वस्मिन् सूत्रे ' इत्यादि,

(छ) प्रतीकेन हि सः (4-1-4) इत्यत्र ' अत्र कल्पनारुचयः केचित्प्राथमिकश्रोत्रियाः ' इत्यादि चानूदितं भाष्यं कस्येति वक्तव्यम् ॥

नेमान् पक्षान् शङ्करभाष्ये भवदीयश्रीकण्ठभाष्ये वा पश्यामः । अतश्च एतदुभयव्यतिरिक्तमपि भाष्यं भास्करात्प्रागासीति अकामेनाप्यङ्गीकर्तव्यमेव । अतश्च 'सुखविशिष्टाभिधानादेव च ' इत्यत्रानूदित पक्षः श्रीकण्ठस्यैवेति कथं शपथयति भवान् ?

नीलवस्त्रधरां त्वं तु स्वकान्तां वीक्ष्य जातुचित् ।
नीलवस्त्रधरास्सर्वाः स्वकान्तां हन्त पश्यसि ॥

नन्वितरस्थलेषु यथातथा वा भवतु, अत्रत्यभाष्यं श्रीकण्ठपक्षं कटाक्षयतीति कथने बाधकं किमिति चेत्—मास्तु संभ्रमः—बाधकं पश्चाद्वर्णयामः । इदानीमस्माधकत्वं परमुच्यते ॥

ननु तर्हि कस्य वा भाष्यं कटाक्षयन्तीमानि भास्करभाष्यवाक्यानीति चेत्—अप्रसक्तमिदमत्र ; शङ्करनीलकण्ठादिभाष्यादतिरिक्तानि सूत्रभाष्याणि भास्करेणावलोकितानीत्यत्र तु न विवादावसरः । आसंश्च तादृशानि कानिचिद्भाष्याणि पूर्वमिति श्रीमद्यामुनमुनिप्रणीतागमप्रामाण्याद्यनुसारेण निर्श्चीयते । तत्र हि श्रीवत्सांकमिश्रविरचितं विशिष्टाद्वैतमतानुयायि संक्षिप्तं भाष्यमासीत्युच्यते । एवमेवान्यान्यपि भाष्याणि स्युः काममिति ॥

ननु यदि रामानुजभाष्यात्पूर्वमपि विशिष्टाद्वैतपरं ब्रह्मसूत्रभाष्यमासीत् किमर्थस्तर्हि रामानुजाचार्याणां श्रीभाष्यप्रणयनपरिश्रम इति चेत्-अप्रसक्तमिदमत्र—

तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं नव्यरङ्गेन्द्रयोगिनः ॥

अतस्तृतीयमपि प्रमाणं न स्वार्थसाधनाय पर्याप्तम् ॥

(४) यच्च वेदार्थसंग्रहादिषु श्रीकण्ठमतमनूद्य दूषितमिति तत्रापि न भवानपराध्यति, किन्तु भवद्दुरभिनिवेश एव ।

न हि वेदार्थसंग्रहे श्रीकण्ठभाष्यानुपूर्वी परिदृश्यते, न वा श्रीकण्ठस्य तद्ग्रन्थस्य वा नाम । असति च समानानुपूर्वीकवाक्ये, अदर्शनेऽपि तस्य तद्ग्रन्थस्य वा नाम्नः कथमिदं वेदार्थसंग्रहवाक्यं श्रीकण्ठमेव कटाक्षयतीति शपथयसि त्वं ? किं श्रीकण्ठात्पूर्वं शैवमतमेव नासीदिति भवता उद्धुष्यते ? उद्धुष्येतापि भवान् स्वैरं. प्रामाणिकास्तु नोरीकुर्युः । न हि शैववैष्णवकलह अर्वाचीनः, न वा श्रीकण्ठोपज्ञः । श्रीकण्ठात्पूर्वमपि हरदत्तादिभ्यः तत्कलहस्य प्रवर्तितत्वात् । श्रीकण्ठोऽपि हि स्वमतं न स्वोपज्ञं वदति, किं त्वात्मानं श्वेताचार्यशिष्यं प्रकटयति । दीक्षितोऽपि हि श्रीकण्ठं हरदत्तानुयायिनं वदति ,न तु स्वातन्त्र्येण सिद्धान्तप्रवर्तकम् ॥

अतश्च यदा समानाऽनुपूर्वी, ग्रन्थनिर्देशः ग्रन्थकृन्नामनिर्देशो वा न दृश्यते तदा तन्मतदूषणमेवेदमिति निर्णयः सर्वथा दुश्शक एव ॥

ननु स्वस्य श्रीकण्ठभाष्यानुकारिताप्रच्छादनायैव रामानुजार्यैः ग्रन्थानुपूर्वी, ग्रन्थग्रन्थकारनामग्रहणं वा बुद्धिपूर्वकं पर्यहारीति चेत्--

ईर्ष्यादुरभिनिवेशद्वेषप्रमुखैः प्रपूर्णकुक्षिस्त्वम् ।
अनुकम्पार्हस्तु सतां, त्वामपि रक्षतु रमाकान्तः ॥

को हि मतिमान भवन्तं विना एवमभिदध्यात्--परेषां स्वस्य तदनन्तरकालिकत्वज्ञानपरिहाराय नामादिकं न गृहीतं, अथापि तन्मतं परं दूषितमिति । यदि श्रीकण्ठः सर्वथाप्रच्छाद्य एव श्रीमद्रामानुजार्याणां तदा यथा ते तन्नाम नास्पृशन् तथा तन्मतमपि न लेशतोऽपि स्पृशेयुस्ते ॥

ननु शैवविद्वेषविमूढमनसः एतन्न प्रतिभातमिति चेत्-- आः !

हन्त त्वामीदृशं मूर्खममर्यादं च वञ्चकम् ।
दुराग्रहिणमुन्मार्गं शिवोऽपि न विलोकयेत् ॥

असंभाष्यस्त्वं सर्वथा सताम्, यस्त्वं सकलजगद्वन्द्यं परमतानिराकरणाद्यवसरे उद्वेजकशब्दपरिहारेण स्वग्रन्थपठितॄणामपि मनसि शान्तिं आदधानमपि पुरुषधौरेयं भक्ताग्रेसरं निस्सङ्कोचं दूषयसि ॥

स्मरामः श्रीकृष्णनामामृतं, वदामश्च तटस्थान् विद्वद्वरान् प्रति—यथा वा श्रीकण्ठभाष्यकृदय बुद्धिपूर्वकमेव स्वग्रन्थस्य कालेयत्तापरिज्ञानपरिहाराय, कस्यापि स्वीयस्य परकीयस्य वा नामगोत्रप्रवरग्रन्थादिकं किञ्चिदपि कुत्रापि नोदाहरति, तादृशी प्रवृत्तिः किं श्रीमद्रामानुजाचार्याणां ग्रन्थेषु यत्र कुत्रचित्परिदृश्यत इति करं हृदि निधाय परिपृच्छन्त्वात्मानमेवेति ॥ अतश्च स्वदोषं परेष्वारोपयितुमयमुद्यम —

लोके हि सहजं त्वेतत् चोरश्चोरान् परान् वदेत् ।
कुलटा च सतीं ब्रूयात् कुलटा इति हि प्रथा ॥

किं कुर्युस्ते—द्वेषाऽसूया च धाष्ट्र्यं चाविवेकित्वं दुराग्रहः ।
एकैकमप्यनर्थाय किमु यत्र तु पञ्चकम् ॥

अतश्च वेदार्थसंग्रहे श्रीकण्ठमतं दूषितमित्येतन्निरूपयितुं न सर्वथा शक्यं । वस्तुतस्त्वत्र विरोधमप्यनुपदं प्रदर्शयामः ॥

यदपि च श्रीभाष्यमङ्गळश्लोकगतश्रीनिवासपदेन श्रीकण्ठमतं निरस्तमिति श्रुतप्रकाशिकायामुक्तमिति—

मुसलपल्लवतुल्यमनीषिणां न हि वयं प्रभवाम निबोधने ।
ऋजुधियः खलु सन्ति विवेकिनः जगति तान् प्रति किञ्चिदिहोच्यते ॥

वेदार्थसंग्रहे व्योमातीतवादनिरसनोपक्रमे 'अनधीतवेदान्तानामिदं चोद्यम्; यतः श्रुतिरेवास्य परिहारमाह' इति व्योमातीतवादं श्रुत्यैव निरस्तं वदन्ति श्रीमद्रामानुजाचार्याः । एवञ्च मेधाविना त्वया श्रुतेः पौरुषेयत्वं व्योमातीतवादस्य ततोऽपि प्राचीनत्वं चाप्यभ्युपगम्येत ॥

मुखमस्तीति वदतां न कश्चिदुपरोधकः ।
प्रमाणपरतन्त्राणां स्वमताया खलु श्रमः ॥

व्याख्यातॄणां खल्वयं चमत्कारः—यत् मूलस्याक्षरैरेव वृत्तवर्तमान वर्तिष्यमाणानामर्थानां संसूचनमिति ॥

ननु कथमिदं वर्तिष्यमाणानामपि पूर्वतनग्रन्थेन निराकरणवर्णनं घटतामिति चेत्—अत्रेदमवधारय त्वं निगमचूडागुरुवरोपदिष्टं—

'आत्रापोद्वापत स्युः कति कति कविधीचित्रवत्तदर्थे-
ष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।
तत्त्वालोकस्तु लोभं प्रभवति सहसा निस्समस्तान् समस्तान्
पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ॥' इति ।

महाचार्यवचनं वाऽवलोकय-

"आरोपितोऽपि तमसां विलयाय दीप
पश्चात्पतङ्गपटलीमपि संपतन्तीम् ।
आगामिनोपि कथकानलमस्मदार्य-
सूक्तिस्तदातनमतं विहितोपरोद्धुम् ॥" इति

अपि च श्रुतप्रकाशिका भवदीयं श्रीकण्ठमतमेव कटाक्षयतीति कथं वा परिज्ञातं भवता? न हि तत्रापि ग्रन्थादिनामनिर्देशो दृश्यते ॥

अतो ग्रन्थकारादिनामनिर्देशाभावे तद्ग्रन्थमेव कटाक्षयतीदं सर्वमिति कथनं कूश्माण्डचौर्यकथाप्रसङ्गे स्वांसम्मार्जनवत् उपहास्यमेव । एवं सति हि दहराधिकरणशङ्करभाष्ये 'अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते, अस्मदीयाश्च केचन' इति वाक्यं रामानुजभाष्यमेव कटाक्षयतीति कृत्वा रामानुजार्यस्यापि शङ्कराचार्यात्प्राचीनत्वं वक्तव्यं स्यात् इत्यलमनया बालानामपि सुज्ञानया चर्चया ॥

वस्तुतस्तु श्रुतप्रकाशिकादिकाले प्रकृतश्रीकण्ठभाष्याद्यतिरिक्तः शैवमतग्रन्थ कश्चन आसीदेवेति सप्रमाणं उत्तरत्र स्वावसरे उपपादयामः ॥

तथा च रामानुजार्यैः श्रीकण्ठमतमनूद्य दूषितमिति कथनं प्रपौत्रस्य स्वप्रपितामहविवाहसन्दर्शनशपथतुल्यमेव ॥

[परोक्तयुक्तिषु बाधकप्रदर्शनम्]

तदेवं श्रीकण्ठभाष्यस्य श्रीभाष्यात्प्राचीनत्वसाधकयुक्तीनामसाधकत्वं प्रदर्शितम् । अथ तत्र बाधकमपि प्रदर्शयामः—

(१) प्रथमं तावत् माधवीयशङ्करविजये श्रीकण्ठनामैव न दृश्यते। तत्र हि नीलकण्ठनामैव पश्यामः । अतः श्रीकण्ठः शङ्करविजये उल्लिखित इति कथनं दिवान्धायमेव ॥

ननु नीलकण्ठश्रीकण्ठपदयोः पर्यायत्वात् श्रीकण्ठभाष्यकर्तुः नीलकण्ठनाम्ना व्यपदेशो युज्यत इति चेत्—हन्त कुशाग्रबुद्धेः चातुर्यं त्रैलोक्यविस्मयावहमेव। एवं तर्हि नीलकण्ठश्रीकण्ठशङ्करपदानां पर्यायत्वेन शङ्करभाष्यमपि नीलकण्ठभाष्य व्यवहरतु भवान्। स्वैरं प्रलपन्तमुन्मत्ताग्रेसरं को वा पर्यनुयुञ्जयात् ?

ननु किमेवं वृथोपालंभसे ? उमापतिशिवाचार्यप्रणीते पौष्करभाष्ये, अघोरशिवपद्धतिव्याख्यायां , क्रियासारादिवीरशैवग्रन्थेषु , शिवज्ञानबोधादिद्राविडशैवग्रन्थेषु भवन्मतीयमहाचार्यविरचितपाराशर्यविजये च एतद्भाष्यकारः नीलकण्ठनाम्नैव निर्दिष्ट इति न जानास्यल्पप्रज्ञस्त्वम् ?

जानाम्येव महात्मन्—न तावन्मात्रं जानामि , किन्तु त्वदुक्तेऽर्थे बहुसामञ्जस्यमपि जानामि । इमान्यत्र पौष्करभाष्याक्षराणि—" पत्युरसामञ्जस्यादित्यत्र भाष्ये नीलकण्ठशिवाचार्यैः 'वयन्तु वेदशिवागमयोर्विशेषं नैव पश्याम ' इत्युक्तम् । यदि सर्वात्मना वेदसिद्धान्तशैवागमयोरभेदः किमर्थं तदुभयनिर्माणमिति चेत्–न–अस्तीयाननयोर्भेदः , वेदस्त्रैवर्णिकाधिकार , आगमाश्चातुर्वर्णिकाधिकारा इति। एतदप्युक्तं श्रीकण्ठभाष्ये वेदस्त्रैवर्णिकविषयः, सर्वविषयश्चान्यः " इति। निर्मलमणिप्रभायामपीयमेवानुपूर्वी परिदृश्यते ॥

अत्र च प्रकृतशैवभाष्यस्य श्रीकण्ठभाष्यसंज्ञया, तत्कर्तुश्च नीलकण्ठनाम्ना च व्यवहारः कृतः; यथा च वैष्णवैः स्वीयभाष्यं श्रीभाष्यसंज्ञया तत्कर्ता च रामानुजसंज्ञया व्यवह्रियते। महाचार्यस्तु 'नीलकण्ठस्तु' इत्युपक्रममाणः शिवार्कमणिदीपिकामेवाक्षरशोऽनुवदति। एतानि किमावेदयन्त्यस्माकम्? श्रीकण्ठभाष्यविषये तत्कर्तृविषये च तदानीन्तनानां नैकरूपः परिचय आसीदिति स्पष्टमवगम्यते॥

श्रीकण्ठभाष्ये तु न कुत्रापि नीलकण्ठनामगन्धोऽपि। अथापि एवं प्राचीनेष्वेव विचित्रो व्यवहारः श्रीकण्ठभाष्यस्वरूपतत्कर्तृतत्प्रामाण्यादिविषये महान्तं संशयमादधाति विमर्शकानां। विवृणुम इदमपि उत्तरत्र॥

तदेतदत्र निष्पन्नं–अप्पयदीक्षितकालात्पूर्वमिदं श्रीकण्ठभाष्यं नासीदेव। निरूप्यते च सप्रमाणमिदमुत्तरत्र। शैवमूर्धन्येनाप्पयदीक्षितेन इदं भाष्यं श्रीकण्ठनाम्नि प्रचारितमभूत्। तदनन्तरं चास्य भाष्यस्य प्राचीनत्वं प्रकटयितुकामैः कैश्चिच्छैवैः माधवीयशङ्करविजये नीलकण्ठपदं पश्यद्भिः स एवायमेतद्भाष्यकर्ता इति ससंकेतमुदघोषि। अत एव एतावान् विभ्रमः सर्वेषाम्॥

ननु भोः! किमेवं वदन् भवान् क्रमशः दीक्षितमेव श्रीकण्ठभाष्यकर्तारं वदेदिव दृश्यते? मा क्रन्दतु भवान् इदानीमेव। भविष्यत्यवसर उत्तरत्र सस्वरप्रलापाय। तत्पर्यन्तं किञ्चिदिव समाहितो भव॥

अत्रेदमवदधतु सर्वे—शङ्करविजयोक्तनीलकण्ठः नास्य भाष्यस्य कर्ता, प्रथमं नाम्नयेव भेदात्। 'शिवतत्परसूत्रभाष्यकर्ता' इत्यत्र शिवतत्पराणि यानि सूत्राणि प्रसिद्धानि पाशुपतसूत्राणि तेषां भाष्यकर्ता इत्येवार्थः। शैवानां हि शिवसूत्रभाष्यप्रणयनं विहाय व्याससूत्रभाष्यप्रणयनं कथं वा घटताम्॥

ननु विना निरोधं सुदीर्घं भाषसे त्वं? वैष्णवानां वा ब्रह्मसूत्रभाष्यप्रणयनं कथं घटताम्? हन्त वत्स! सम्यक् पृच्छसि। परन्तु शैवानां शिवसूत्रमिव वैष्णवानां विष्णुसूत्रं यत्र क्वापि भवता दृष्टं? यदि स्यात् तदा तत्परित्यज्य ब्रह्मसूत्रभाष्यप्रणयनं त्वमाक्षिपेः। अतो मा पृच्छ विषयमपरिज्ञाय। वदामश्च उत्तरत्र शैवानां ब्रह्मसूत्राणां च पारंपरिकोऽपि संबन्धो नास्तीति॥

एवञ्च शङ्करविजयोक्तनीलकण्ठस्य प्रामाणिकत्वेऽपि नायं ब्रह्मसूत्र-भाष्यकर्ता, किन्तु शिवसूत्रभाष्यकर्तैव। अन्यथा हि—

'तदनन्तरमेष कामरूपानधिगत्याभिनवोपशब्दगुप्तम्।
अजयत् किल शाक्तभाष्यकारं' (शं-दि-15-158) इति श्लोके 'शाक्तभाष्यकारं' इत्यभिनवगुप्तस्य निर्देशात् ब्रह्मसूत्राणां शाक्तमत-परं भाष्यमप्यासीदित्यभ्युपगन्तव्यं स्यात्। न हि तत्कस्यापि सम्मतम्, युक्तं वा। अतः शङ्करविजये नीलकण्ठनाम्न एव दर्शनात् तस्य ब्रह्मसूत्र-भाष्यकारत्वाभावाच्च न भवदभिमतसिद्धिः॥

अपि च शङ्करविजये नीलकण्ठ हरदत्तगुरुत्वेन निर्दिष्टः, भवत्कू टस्थस्तु दीक्षितः श्रीकण्ठं हरदत्तानुयायिनं वदति*, त्वं तु नीलकण्ठ-श्रीकण्ठयोरैक्यं ब्रवीषि। हन्त पश्य भवतो भवदीयानां च मतिविभ्रमम्।

युक्तोऽपथप्रवृत्तानां विविधो मतिविभ्रमः।
न राजमार्गनिष्ठानां मतिविभ्रमसंभवः॥

सर्वथा तु हरदत्तगुरुं नीलकण्ठं वर्णयच्छङ्करविजयकाव्यं हरदत्ता-नुयायिनः श्रीकण्ठस्य प्राचीनतायां न मानं भवेत्॥

वस्तुतस्तु—शङ्करविजयोक्त नीलकण्ठोऽपि सर्वथा माधवार्येण परि-कल्पित एव। शङ्करविजयग्रन्थेषु प्राचीनतमत्वेनाभिमते हि आनन्दगि-रीयशङ्करविजयकाव्ये शङ्कराचार्यैः शैवपराजयवर्णनेऽपि न तत्र नील-कण्ठनामानं कञ्चन शैवमुल्लिखितं पश्यामः। प्रसिद्धरामेश्वरक्षेत्र एव च शैवानां पराजयस्तत्रावर्णि। माधवीयशङ्करविजये तु गोकर्णक्षेत्रे पश्चिम-समुद्रतीरदेशान्तर्गते नीलकण्ठपराजयो वर्ण्यते। श्रीकण्ठशिवाचार्यवि-रचितत्वेन आन्ध्रदेशे प्रकटितस्य गीताभाष्यस्य भूमिकायां तु अयं श्रीकण्ठशिवाचार्य गोदावरीनदीतीरवासीति उद्घुष्यते। किमत्र तत्त्व-

* शिवाद्वैतनिर्णये—"सुदर्शनाचार्यैरपि तात्पर्यसंग्रहे गरुडैक्यभावनादृष्टान्त एवो-पात्तः 'ब्रह्मोच्यते परमसौ परम च तत्त्वं ज्योतिः परं च परमेश्वर पद्मनाभः। तद्भा वनैकरसिकस्तदनन्यभावात् मन्त्री यथा गरुडभावनया गरुत्मान्' इति। तदनु वर्तिना श्रीकण्ठाचार्याणामपि तथैव मतमिति युक्तम्' इत्युक्तम्। अयमर्थ एव सूर्य नारायणशास्त्रिणापि स्वीयान्ध्रभाषाग्रन्थे शिवाद्वैतनाम्नि॥

मिति निर्णेतुं न कोऽपि प्रभवेत् . यतस्सर्वमिदं ईश्वरमायापरिकल्पितमेवेति प्रामाणिका बहुमन्यन्ते । विशेषश्चाभिधास्यते ह्युपरिष्टात् ॥

किञ्च माधवाचार्यैः स्वीयशङ्करविजयारम्भे व्यासाचलविरचितशङ्करविजयमनुसृत्यैव स्वेनेदं क्रियत इति सूचयति । दृश्यन्ते च परश्शतं श्लोकाः व्यासाचलीयशङ्करविजयगताः माधवीयशङ्करविजये तथैव । परन्तु व्यासाचलीयशङ्करविजये नीलकण्ठनाम्न उल्लेख एव नोपलभ्यते ॥

एतत्सर्वपरिशीलनायामित्थमेव प्रामाणिका निश्चिन्वन्ति—माधवीयशङ्करविजयोल्लिखितो नीलकण्ठः केवलं काल्पनिक एव । अनन्तरकालिकैः कैश्चिच्छैवैः श्रीकण्ठभाष्यस्य प्राचीनत्वं साधयितुमिच्छुभिः श्रीकण्ठनीलकण्ठनाम्नोरभेदः ससङ्केतं प्रचारितः । ईदृशकिंवदन्तीविश्वासात् माधवीयशङ्करविजयव्याख्याता धनपतिसूरिः 'शिवतत्त्वपरसूत्रभाष्यकर्ता' इत्यत्र 'ब्रह्मसूत्रभाष्यकर्ता' इति व्याचख्यौ । नीलकण्ठस्य वास्तविकत्वेऽपि अभिनवगुप्तविषयकस्य 'अजयन्किल शाक्तभाष्यकारम्' इत्यस्य यथा निर्वाहः तथैव निर्वाहः अत्रापि वक्तव्यः ॥

युक्तश्च श्रीशङ्करार्यप्राशस्त्यप्रकटनैकपर्येण प्रवृत्ते काव्ये विचित्रकल्पनाप्रपञ्चः कविवरस्य माधवस्येति ॥

एवं सत्यपि वस्तुतत्त्वे यदि नाम शैवाद्वैती भूत्वा भवान् पृष्ठतः कृत्वा सर्वाण्यपि प्रमाणानि दुराग्रहमात्रात् माधवीयशङ्करविजयोक्तं नीलकण्ठं ब्रह्मसूत्रभाष्यकारमेव सशपथं ब्रूयात्—तदा—

> मधु पश्यसि दुर्बुद्धे ! प्रपातं नैव पश्यसि ।
> इति वाक्यं जयन्तस्य स्मार्यते भवताऽधुना ॥

पश्य भो समापतितमनर्थजातम् । सन्ति शैवविशेषेषु लिङ्गधारिणः वीरशैवा इति केचन । ते त्वेवमभिमन्यन्ते—शङ्करविजयकाव्येषु प्राचीनतमे आनन्दगिरीयशङ्करविजये शङ्करार्यैः पराजिताः शैवाः लिङ्गधारिण इति वर्ण्यते । एवञ्च शङ्कराचार्यपराजितत्वेन माधवेन वर्णितः नीलकण्ठशिवाचार्यः लिङ्गधारिवीरशैवमतानुयाय्येवेति स्पष्टम् ॥

अयञ्च नीलकण्ठः इदानीं परिदृश्यमानशैवभाष्यकर्तुः श्रीकण्ठाद्भिन्न एव । प्रथमं नाम्न एव भिन्नत्वात् , लिङ्गधारिवीरशैवसिद्धान्तविरुद्धत्वाच्च तद्भाष्यस्य । वीरशैवास्तु मुक्तावभेदवादिनः , वर्णाश्रमधर्मा-

नभ्युपगन्तारश्च । श्रीकण्ठभाष्यं तु मुक्तौ सर्वथा भेदवादि, वर्णाश्रम-धर्मानुगुणं च । एतद्विस्तरश्च पश्चाद्वदिष्यति । अतश्च वक्तृभेदाद्विषय-भेदाच्च नेदं भाष्यं शङ्करार्यसमानकालिकनीलकण्ठविरचितम् ॥

अपि च क्रियासारनामकः मैसूरप्राच्यविद्यासंशोधनालयमुद्रित कश्चन वीरशैवमतीयग्रन्थो वर्तते । तत्कर्ता च ग्रन्थारम्भे एवं वदति—

नीलकण्ठमुखाम्भोधेर्निगमागमवर्त्मना ।
निर्गतत्वेन तन्नाम्ना नीलकण्ठस्ततोऽल्पम ॥ २७ ॥
समुपेत्य तदा व्यासः प्रार्थयामास शङ्करम् ।
मतानि विविधान्येव समुत्पन्नानि शङ्कर ! ॥ २८ ॥
मत्कृतानां च सूत्राणां अयथानयनं कृतम् ।
परमेवेति निश्चित्य कुर्वन्ति कलहं मिथः ॥ २९ ॥
त्वत्प्रसादेन लब्धस्य सूत्रजालस्य शङ्कर ।
यथापूर्वं त्वया कार्यं मत्सूत्रार्थविवेचनम् ॥ ३० ॥
इति तेन प्रार्थितस्सन् दयालुः पार्वतीपतिः ।
नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ॥ ३१ ॥
मयाऽपि तस्य तात्पर्यं श्रोतॄणां सुखबुद्धये ।
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ॥ इति ॥

एवञ्च क्रियासारकर्ताऽयं नवीननीलकण्ठः प्राचीननीलकण्ठविरचित-भाष्यानुसारात्सूत्रार्थं व्यरूपयदित्यवगम्यते । तद्रीतेः श्रीकण्ठभाष्यरीतेश्च न सम्बन्धलेशोऽपीति तत्पठितॄणां स्पष्टं भायात् । अतो नेदं भाष्यं शङ्करार्यसमानकालिकनीलकण्ठविरचितं भवितुमर्हति, तदन्यदेवेति ॥

नैतावन्मात्रं, शान्तिकर्मणि वेतालोदयमपि पश्य ! तदेतस्मिन् नील-कण्ठभाष्यानुसारिणि क्रियासारे सप्तविंशोपदेशे स्वपक्षस्थापनावसरे बहुत्र प्रमाणतया 'तथा च भाष्यम्' इत्युद्धृत्य एकं ब्रह्मसूत्रभाष्यं प्रदर्शयति तत्कर्ता*। तच्च भाष्यं नीलकण्ठकृतमिति वीरशैवैरुच्यते । न ह्यन्यदीयं भाष्यं स्वसिद्धान्तस्थापनावसरे केनचित्प्रमाणीक्रियेत। प्रति-

* मैसूरनगरमुद्रितक्रियासारस्य तृतीयसम्पुटे— १९०, १९१, १९२, १९४, १९७, २०३, २०८ प्रभृतयः पुटा द्रष्टव्याः ॥

ज्ञातं च ग्रन्थकारेणापि ग्रन्थारंभे नीलकण्ठभाष्यानुसारात् स्वेनैतत्क्रियत इति। एवं प्रदर्श्यमानं नीलकण्ठभाष्य शाङ्करब्रह्मसूत्रभाष्यसमानानुपूर्वीकं इत्यवश्यावधेयोऽयं विषय.। नीलकण्ठश्च भवद्दृष्ट्या शङ्कराचार्येभ्योऽपि प्राचीन.। शङ्करार्यै. पराजयकाल एव खलु स्नः शिवतत्परसूत्रभाष्यकर्ता ' इति निर्दिष्टः। एवञ्च क्रियासारप्रदर्शितनीलकण्ठभाष्यस्य शाङ्करभाष्यस्य च समानानुपूर्वीकत्वे परिदृश्यमाने नीलकण्ठस्य प्राचीनत्वे सिद्धे च शङ्कराचार्यैः नीलकण्ठभाष्यमेवानुकृतमक्षरश इति कथने कं समाधिमातिष्ठेत भवान्—

भो भो किमिदं? सकलजगद्विदितप्रभावातिशये शङ्करार्येऽपि विप्रतिपद्यते भवानेवम्?

अयि कृपार्ह! मास्तु संभ्रम —

नाहमुच्छृङ्खलस्तात! न वा मूढो यथा भवान्।
प्रत्युच्यन्तां त्वया धीर! वीरशैवाः स्वबान्धवा ॥

यो वैष्णवद्वेषविमूढबुद्धिः शैवेषु सौहार्दमवाञ्छयस्त्वम्।
यश्चाप्यनिन्द्यो बत लक्ष्मणार्यान् युक्तं फलं भुङ्क्ष्व दुरत्ययं त्वम् ॥

यदीह सत्यमेव माधवार्यवर्णितं
ब्रवीषि नीलकण्ठशैवमेनमाग्रहात्।
तदा स शङ्करार्यमार्गदर्शको भवेत्
ध्रुवं न लक्ष्मणार्यमार्गदर्शको भवेत् ॥

पश्य सङ्कटमसत्यभाषणे, विस्मर त्वमिह माधवं कविम्।
नो यदीह निपतेस्तु सङ्कटे दुस्तरे निखिललोकनिन्दिते ॥

ननु नीलकण्ठस्य शङ्करपराजितत्वेनैव तत्र वर्णनात्, स्वभाष्य विसृज्य स शङ्करशिष्योऽभवदिति कथनाच्च यथास्थितं सर्वं घटतामिति चेत्—

भवद्गृहे वा भवदीयगोष्ठ्यां वदन्तु कामं न हि तेन हानिः।
श्रीशङ्करार्यं खलु नीलकण्ठविनिर्जितं ते प्रवदन्ति शैवा ॥

अभ्यधायि चेदं मधुरानगरमुद्रिते द्राविडभाषात्मके बृहदर्थकोशे नीलकण्ठशिवाचार्यपदार्थविवरणावसरे इत्यप्यवधेयमायुष्मता ॥

ननु यदि नीलकण्ठभाष्यमेव शाङ्करभाष्यस्याप्युपलम्भनं तर्हि तद्भाष्यमेव लब्धप्रतिष्ठं भवेत्, न तु शाङ्करभाष्यम्। दृश्यते तु वैपरीत्यम्। अतोऽविश्वसनीयमेतदिति चेन्—

कुतो वा नाध्यगच्छस्त्वं मम धार्ष्ट्यमिदं पुरा।
रामानुजार्यविषये, किं नष्टं नयनं तदा?

ततश्च माधवोल्लिखितो नीलकण्ठो यदि नाम सत्यः, यदि च तेन वस्तुतो ब्रह्मसूत्रभाष्यं च प्रणीतं स्यात्तदा तद्भाष्यं नेदानीं परिदृश्यमानश्रीकण्ठभाष्यं सर्वथा भवितुमर्हति नामभेदात्, क्रियासाराद्यनुरोधेन विषयवैलक्षण्याच्च। अतश्च तद्भाष्यं शङ्करार्यस्यापि प्रमाणप्रदमिति वदन्तो वीरशैवाः त्वया प्रतिवक्तव्याः॥

सन्तु भोः! शङ्कराचार्याः नीलकण्ठानुकारिणः।
त्वद्गुरोर्वारिता तेन श्रीकण्ठानुकृतिः कथम्?

किं न जानासीदानीमपि तत्त्वम्?

शङ्करविजयोक्तः नीलकण्ठ यदा श्रीकण्ठादतिरिक्तः सिद्धः, सिद्धं च तद्भाष्यं प्रकृतश्रीकण्ठभाष्यादतिरिक्तं तदा श्रीकण्ठस्य रामानुजाचार्येभ्यः प्राक्तनत्वे प्रमाणं दुर्लभमेव। तेन च शङ्कराचार्याणां नीलकण्ठानुकारित्व सुप्रतिष्ठितम्। रामानुजाचार्याणां तु श्रीकण्ठानुकारित्वं स्वत एव गलहस्तितमित्यवगच्छ महात्मन्!

वत्स! पश्य भवदीयकृत्यया मद्विनाशविनियुक्तया त्वया।
प्राप्तमद्य हि तवैव नाशनं, भुज्यतां फलमकृत्यकर्मणः॥

तथा चात्र द्वयीगतिः–माधवार्योल्लिखितः नीलकण्ठः केवलं काल्पनिक इत्येका। तस्य वास्तविकत्वेऽपि स नेदानीं परिदृश्यमानश्रीकण्ठभाष्यस्य कर्ता, किन्तु शङ्करब्रह्मसूत्रभाष्यस्यापि मूलभूतस्य वीरशैवमतानुयायिभाष्यस्यैव कर्ता स्यात् इत्यपरा॥

हन्त वत्स! कतरस्तत्र प्रियः प्रोक्तयोरुपरिपक्षयो वद।
नेष्टसिद्धिरुभयप्रकारतः; प्रत्युतेह तव सङ्कटं महत्॥
तस्मात् यदि गुरुं स्वं त्वं शङ्करार्यं रिरक्षसि।
माधवार्यवचः सर्वं दुःस्वप्नमिव विस्मर॥

(२) अथ पूर्वोक्तद्वितीययुक्तौ बाधकं प्रदर्शयामः—

तत्रेदं भवता प्रथमतः सुदृढं वक्तव्यम्—श्रीकण्ठः किं हरदत्तगुरुः ? उत तच्छिष्यः ? शङ्करविजयस्तु नीलकण्ठं हरदत्तगुरुं दर्शयति । अप्पय्य-दीक्षितास्तु श्रीकण्ठं हरदत्तानुयायिनं वदन्ति ॥

श्रीकण्ठभाष्यस्य श्रीकण्ठभाष्यसमर्थनाख्यम् एकं व्याख्यानं हरदत्ताचार्येण कृतमिति वेङ्कटरमणशास्त्री सशपथं वदतीति सूर्यनारायणशास्त्रिणाभिधीयते * । परन्तु स सूर्यनारायणशास्त्री श्रीकण्ठं शङ्करविजयोल्लिखितात् नीलकण्ठाद्भिन्नं हरदत्तानुयायिनमुद्घोषयति ** । अत्र किं सत्यमिति भवता वक्तव्यम्—

हन्त त्वमनुकम्पार्हो मिथ्यावादी दुराग्रही ।
पश्य मिथ्यां ब्रुवाणानां दुर्गतिं दुरतिक्रमाम् ॥

यद्यत्र माधवार्यः वेङ्कटरमणशास्त्री च प्रामाणिकौ तदा भवत्कूटस्थः दीक्षितः बलिर्देयः स्यात् । यदि च दीक्षितप्राणसंरक्षणमभिमतं तदा माधवार्यं तदनुयायिनं च बलिं देहि ॥

अत्र चाद्ये पक्षे दीक्षितबलिदानेनापि न भवदिष्टसिद्धिः, यतः हरदत्तकालः पुराणाभिहितः अत्यन्तमसमञ्जस इति सूर्यनारायणशास्त्री स्पष्टं वदति × । निरूपितं च पूर्वमेव माधवीयशङ्करविजय ऐतिहासिकांशे सर्वथा न प्रमाणीभवितुमर्हतीति ॥

द्वितीये तु पक्षे दीक्षितप्राणसंरक्षणेऽपि तत्र त्वत्संरक्षणं त्वतीव दुर्घटम् । हरदत्तकालस्य डोलायमानत्वे तदनुयायिनः श्रीकण्ठस्य कालनिर्णयः कथं वा सुशकः । सूर्यनारायणशास्त्र्यपि महता विचारेण हरदत्तं क्रैस्त 1119 कालिकं स्थापयति × । श्रीकण्ठश्च न हरदत्तशिष्यः, किन्तु तदनुयाय्येव । अतश्च श्रीकण्ठहरदत्तयोर्मध्ये द्वित्रपुरुषव्यवधानमावश्यकम् । ततश्च श्रीकण्ठः क्रैस्त 1019-1139 कालिकेन सूर्यनारायणशास्त्रिणैवाभिहितेभ्यो | रामानुजार्येभ्योऽर्वाचीन इति स्वतस्सिद्धम् ॥

---

* आङ्ग्लभाषात्मकस्य शिवाद्वैतनामकग्रन्थस्य १६ तमपुटे टिप्पणी द्रष्टव्या ।

** शिवाद्वैतनामकग्रन्थे १२, ४० ४१ तमपुटा द्रष्टव्याः ।

× शिवाद्वैतनामकग्रन्थस्य ४१ तमपुटो द्रष्टव्यः ।

| ,, ,, ६९ तमपुटो द्रष्टव्यः ।

ननु भोः श्रीकण्ठस्य हरदत्तसमानकालिकत्वेऽपि शिष्यस्याप्यनुयायित्वमस्त्येवेति हरदत्तानुयायी श्रीकण्ठ इति कथनं कथं विरुध्यते ?

वृषलोद्वाहमन्त्राख्यन्यायस्याद्यनिदर्शनम् ।
त्वदुक्तयस्त्वतो नैव विरोधं क्वापि पश्यसि ॥

श्रीकण्ठः खलु आत्मानं श्वेताचार्यशिष्यं प्रकटयति न तु हरदत्तनामापि स्मरति । एतत्पश्यन्नेव दीक्षितोऽपि जागरूकस्सन् हरदत्तानुयायिशब्दं प्रयुङ्क्ते । त्वं तु सर्वं विस्मृत्य स्वैरं प्रलपसि ॥

प्रमाणाद्यनुसारेण वक्तुं किञ्चित् खलु श्रमः ।
मुखमस्तीति वदता न कुत्रापि श्रमो भवेत् ॥

ननु हरदत्तसमानकालिकत्वेऽपि हरदत्तशिष्यत्वाभावादेव हरदत्तप्रदर्शितमार्गानुसरणमात्रेणापि तथा कथनं युज्यत एवेति चेत्—

प्रशंसामस्त्वसामान्यकल्पनाचातुरी तव ।
कियत्पर्यन्तमातिष्ठेत् असत्यं रक्षितं त्वया ॥

को हि नाम वदेदेवं मेधाविनं भवन्तं विना—श्रीकण्ठोऽयं आत्मानं श्वेताचार्यशिष्यमुद्घुष्यन् जीवत्येव स्वाचार्ये स्वाचार्यानुगमनं परित्यज्य हरदत्तमनुगच्छतीति । विचित्रमेतत् । उच्चैर्मा वदतु ! अभिज्ञा उपहसेयुः ॥

युज्यते खलु भवादृशां तथाभाषणं निजगुरुद्रुहां सताम् ।
श्वेतयार्यगुरुशिष्य एव सन् अन्वगात्स हरदत्तमित्यहो ॥

अतश्च श्रीकण्ठस्य हरदत्तानुयायित्वं श्वेताचार्यशिष्यत्वं चेत्युभयं समानकालिकं सर्वथा नोपपादयितुं शक्यं वाचस्पतिनापि । यदा च हरदत्तात् व्यवधानं सिद्धं तदा रामानुजार्यादनन्तरकालिकत्वं स्वत एवायातम् ॥

अपि च—वक्ष्यामो हरदत्तस्य श्रीकण्ठस्य च वस्तुतः ।
सम्बन्धलेशो नास्तीति स्वावकाशे सुविस्तरम् ॥

(३) तृतीये तु बाधक स्पष्टमेव । भास्करभाष्यानूदितसूत्रपाठस्य श्रीकण्ठभाष्यपरिदृश्यमानपाठाद्वैलक्षण्यं को वा चक्षुष्मान् न जानीयात् । भास्करभाष्येऽनूदितः पाठः ‘ अत एव तद्ब्रह्म ’ इति । श्रीकण्ठभाष्ये तु निर्णयसागरमुद्रिते ‘ अत एव ब्रह्म ’ इत्येव पाठः । मैसूरुनगरमुद्रिते तु

अत एव च स ब्रह्म ' इत्येव , न तु कुत्रापि तद्ब्रह्मेति । एवं सति तदेवानूदितमिति कथयतस्तव चक्षुषः पाटवं प्रशंसनीयमेव ॥

नीलवस्त्रां नरां कश्चित् स्वकान्तां वीक्ष्य जातुचित् ।
नीलवस्त्रधरास्सर्वाः स्वकान्तां प्रत्यपद्यत ॥
ततोऽपि खलु धूर्तस्त्वं अनीलपटधारिणीम् ।
अपि योषितमुद्वीक्ष्य स्वकान्तां हन्त पश्यसि ॥

ननु भोः किमिदं भवान् अल्पमपि महत् भावयति । लेखकप्रमादाद्वा अन्यस्माद्वा किञ्चित्कारणात् किञ्चिदक्षरस्खालित्यमापतितं स्यादिति चेत्-

कष्टमेतदविचार्य यत्कृतं त्वादृशेन सह भाषणादिकम् ।
सत्यमुक्तमभियुक्तलज्ञैः दुस्सहस्त्विति हि मूर्खसङ्गमः ॥
करखरयोः कलखलयोः अन्तरमिह यो न जानीयात् ।
विवदितुमहं न शक्तः तेन तु विपश्चिद्वरिष्ठेन ॥

विवादग्रस्तस्थले हि नैकमक्षरं केवलं, एका मात्रापि विपरीता विपरीतमेव फलं आवेदयेदित्यलमनेनाक्षरमौल्यपरिज्ञानविधुरदुराग्रहतुन्दिलपामरजनपरिभाषणव्यसनेन ॥

अत्रेदमप्यवधेयम्—शङ्करविजये हि शङ्करार्यपराजित नीलकण्ठः स्वभाष्यं विसृज्य शङ्करार्यशिष्योऽभवदित्यभिधीयते । भाष्यस्य विसर्जनं नाम तत्प्रवचनप्रचारादिनिरोध एव । ततश्च नीलकण्ठेनैव निरुद्धप्रचारं तद्भाष्यं कथं कालान्तरे भास्करेणोपलब्धं स्यात् ॥

ननु भास्करादप्यर्वाचीनेन क्रियासारकर्त्रा नीलकण्ठभाष्यमुद्धृतमिति भवतैवोक्तम् , इदानीं तु तद्भाष्यं तदानीमेव नष्टमभिप्रैषि । किं भवतः प्रष्टैव नास्ति ?

वत्स ! न तावन्मात्रमुक्तं शाङ्करभाष्यस्यापि प्राणप्रदं स्यात्तद्भाष्यमित्यप्युक्तम् । सर्वमङ्गीक्रियते चेत् अङ्गीक्रियताम् । नार्धजरती युक्ता ॥

यद्यपि न कापि हानिर्मम , यदि निपतेत् भवान् महाकूपे ।
अनुचितमिदमिति मत्वा हाहाहाहेति खिद्यते चेतः ॥

किञ्च नीलकण्ठमेव पराजितवद्भिः श्रीशङ्करार्यैः कुत्रापि नीलकण्ठभाष्यं कुतो वा नानूद्य दूषितम् ? नैतावन्मात्रं , अपि तु गण्डस्योपरि-

...टकमिति संवृतं द्रष्टव्यं–एवं शङ्कराचार्यं पराजयान् नीलकण्ठेनैव विस्तृ-
तत्वेनोक्तस्य भाष्यस्य शङ्करभाष्यस्य च विरोधलेशोऽपि नास्तीति
कथयन् दीक्षितः उक्तभाष्ययोः ऐककण्ठ्यं साग्रहं साधयति शिवाद्वैत-
निर्णये इति ॥

अहह परमया शैवसुहृत्तमं विमथनं किल शङ्करदूषकम् ।
तदिह चाद्वयवादरता बुधाः किमिति बिभ्रति मूर्धसु सादरम् !

तथा च भास्करभाष्ये श्रीकण्ठभाष्यानुवादलेशान्वेषणं तुहिन-
गिरितटे तालफलगवेषणायितम् ॥

(४) भगवता रामानुजार्येण श्रीकण्ठमतमनूद्य दूषितमिति कथयन्तं
दुराग्रहाक्रान्तं तु कथं वा प्रतिबोधयेमेति स्तब्धा वयम् । वेदार्थसंग्रहे खलु
'यदपि दैवं विरुद्धमिव दृश्यते'–इत्यादावेकत्र, 'यत्पुनरिदमाशङ्कितम्'
इत्यादावपरत्रेति स्थलद्वय एव शैवपक्षसंस्पर्शः । तत्राद्यं प्रकरणं जग-
त्कारणमुपास्यं परं ब्रह्म नारायण एवेति प्रसाधनपरम् । द्वितीयं कारणा-
न्तरस्याशङ्क्यप्रतिषेधपरम् । प्रकरणद्वयमपीदं श्रीकण्ठमतं लेशतोऽपि
न स्पृशति । तथा हि–पूर्वं हि तत्र नारायण एव परं ब्रह्मेति प्रसाधितम् ।
पुराणेषु च कुत्रचित् शिवस्य परब्रह्मत्वकथनेऽपि पुराणानां सात्त्विक-
राजसतामसत्वेन भिन्नत्वेन विष्णुपारम्यप्रतिपादकानां सात्त्विकानामेव
पुराणानामुपादेयतमत्व, इतरयोस्तत्प्रतिबुद्धविषयत्वमित्येवं रीत्या विष-
यविभागेन पुराणानां परस्परविरोधश्च प्रशमितः ॥

तदुपर्येवमाक्षेपः—उपनिषत्स्वेव कुत्रचित् नारायणाद्भिन्नस्य पर-
ब्रह्मत्वाभिधानात् कथं नारायणः परं ब्रह्मेत्युद्घुष्यते भवता । न हि पुरा-
णानामिव उपनिषदामपौरुषेयाणां सात्त्विकादिविभागाङ्गीकारेण निर्वाहः
प्रदर्शयितुं शक्यः—इति ॥

एवञ्चात्र पूर्वपक्षो न कञ्चिद्विशिष्यानुसन्धाय प्रवृत्तः, न तरां
श्रीकण्ठं, न तमां च तदीयं भाष्यम् । पूर्वं यथा पुराणविचारः स्वातन्त्र्येण
प्रवर्तितः तथाऽयमपीति सुस्पष्टम् ॥

अपि च वेदार्थसंग्रहे 'प्राणं मनसि सह करणैः' इत्याद्यथर्वशिखा-
वाक्योपादानेन पूर्वपक्ष उपक्रम्यते । तत्र च, भवता परब्रह्मत्वेन दृश्यमा-
नस्य नारायणस्य रुद्रसृज्यत्वकथनात् कथं नारायणस्य परत्वमुपास्यत्वं

चेति पूर्वपक्षहृदयम् । श्रीकण्ठभाष्ये कुत्र वा एतच्छ्रुत्युपादानेन एवंरीत्या शिवपारम्यं प्रसाधितमिति वक्तव्यम् । अत्राधिकरणे एवं त्रैव 'ध्यायीतेशं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इत्यादेव वाक्यमुपात्तम्, न तु वेदार्थसंग्रहवत् 'प्राणं मनसि' इत्यारभ्य । नापि तत् प्रकरणं विष्णुपारम्यनिराकरणपूर्वकं शिवपारम्यप्रसाधनपरम् । नापि चेद वाक्यं शिवपारम्यस्थापनायोपात्तम्, किन्तु श्रीभाष्यशङ्करभाष्यादाविव सर्वस्यापि जगतः परब्रह्मसृज्यत्वस्थापनाय उपष्टंभकतया । वेदार्थसंग्रहप्रक्रिया तु सर्वथाऽस्मादत्यन्तविलक्षणा ॥

एवं द्वितीयमपि प्रकरणं न श्रीकण्ठमतस्पर्शि । तत्र हि एवं पूर्वपक्षोन्मेषः प्रादर्शि—अस्तु जगत्कारणं नारायण एवेति, परन्तु जगत्कारणादतिरिक्तमेव वस्तु मुमुक्षूपास्यम् । दहरविद्यायां आकाशशब्देन जगत्कारणं वस्तु निर्दिश्य तदन्तर्वर्तिनः अन्यस्य वस्तुनः उपास्यत्वं प्रतिपाद्यते । नारायणश्च जगत्कारणमिति भवतैवोक्तम् । ततश्च तदन्तर्वर्तिनः शिवस्योपास्यत्वं सिद्धमेव—इति ॥

अयमेव व्योमातीतवादः । 'उपादानं तु भगवान् निमित्तं तु महेश्वरः' इति आगमादावप्ययमेव पक्षः प्रदर्शितः, 'पत्युरसामञ्जस्यात्' इत्यादिना सूत्रकारैः प्रतिक्षिप्तश्च । अयमेव च विशुद्धः शैवपक्षः हरदत्तप्रमुखैः 'विश्वाधिकस्त्वमसि विश्वमयो मुरारिः यज्ञेश्वरस्त्वमसि यज्ञममुं गृणन्ति । आद्या जगत्प्रकृतिरेष भवान्निमित्तमात्र कथं नु भगवन् उभयोरभेदः' (४५) इत्यादौ समवर्णि ॥

एवञ्च निमित्तोपादानभेदवाद एव व्योमातीतवादः । श्रीकण्ठस्तु निमित्तोपादानाभेदवादी । अन्यथा हि प्रकृत्यधिकरणमेवोपरुद्ध्येत, निमित्तस्यैवोपादानत्वसमर्थनार्थं हि तदधिकरणं प्रवृत्तमिति संप्रतिपन्नम् । अतश्च व्योमातीतवादो न श्रीकण्ठसम्मत इत्येव वक्तव्यम् ॥

ननु 'परिणामात्' इत्यत्र शिवशक्तिपरिणामभूतस्य नारायणस्योपादानत्वं, शिवस्य तु निमित्तत्वमित्येवान्ततास्सिद्धान्तितं किं न पश्यसि ?

पश्यामि भो ! विचारयामश्चैतत्तत्वं उपरत्र विस्तरशः ॥

परन्तु प्रकृति-न विलक्षणत्व-तदनन्यत्व-कृत्स्नप्रसक्त्यधिकरणेषु रामानुजवदेव निमित्तोपादानाभेदवाद एव श्रीकण्ठभाष्ये स्पष्टमु-

पापादि। निमित्तोपादानभेद एव हन्दत्तादिसम्मते व्योमातीतवादे। अतो वेदार्थसंग्रहः श्रीकण्ठमतं न कथञ्चिदपि स्पृशति ॥

अपि च श्रीकण्ठभाष्ये दहराधिकरणे सिद्धान्तोपक्रमे 'परमेश्वर एव दहराकाशः' इति, उपसंहारे 'तस्मादीश्वर एव दहराकाशः' इति चोक्तम्। वेदार्थसंग्रहपूर्वपक्षे तु दहराकाशस्य न परमात्मत्वं, किन्तु तदन्तर्वर्तिनः अन्यस्यैवेति महान् विशेषः ॥

ननु 'प्रसिद्धेश्च' इति सूत्रभाष्यशिवार्कमणिदीपिकयो दहराकाशस्य शक्तिरूपत्वपक्षः प्रदर्शित एव। अत्र कं विरोधं पश्यति भवान्?

विरोधदर्शनमस्तु महात्मन्! ततोऽपीदमेव अत्र पश्यामि—भवद्दीक्षितः नूतनं शैवमतं स्थापयन् किमपि निष्कृष्य प्रदर्शयितुं नाशकदिति। 'दहराकाशतदन्तर्वर्तिनोर्मध्ये कः शिवः? का च शिवा? उभयथाप्युपपद्यते' इति हि तत्रैव भवद्गुरोर्वचनम् ॥

रामस्य सीता किमु धर्मपत्नी सेवेदुताहो भगिनीति पृष्टः।
बृहस्पतिः कश्चिदवोचदेवं का हानिरत्रोभयथापि चास्तु ॥

अस्त्वेतत्—मामेवं पृच्छन् त्वं शिवार्कमणिदीपिकामान्तमपश्यः किं? तत्र हि दहराकाशतदन्तर्वर्तिनोर्मध्ये कस्योपास्यत्वमित्युपक्षिप्य 'तस्मात् दहराकाशः तदन्तर्वर्ती चोपास्यः' इति खलूपसंहृतम्। एवञ्च श्रीकण्ठमतमुभयोरुपास्यत्वपरमिति निर्णयः समजनि। वेदार्थसंग्रहे तु दहराकाशान्तर्वर्तिन एवोपास्यत्वं, न सर्वथा दहराकाशस्येति पक्ष एव प्रादर्शि। ततश्च वेदार्थसंग्रहे श्रीकण्ठपक्ष एव दूषित इति कथनमुपहास्यम् ॥

लोके पराभवकथा समवर्णि या या
　मामेव नूनमिह सा विपरीकरोति।
इत्थं विचिन्त्य परगर्वममुद्धतं त्वा-
　मन्तर्हसन्ति विबुधा गतपक्षपाताः ॥

अतश्च वेदार्थसंग्रहे दूषितः पक्षः न श्रीकण्ठस्य, किन्तु पाशुपताधिकरणप्रतिक्षिप्तस्य निमित्तकारणतामात्रवादिशुद्धशैवस्यैव ॥

एतेन श्रीभाष्यमङ्गलश्लोकव्याख्यानावसरे श्रुतप्रकाशिकायामुक्तपक्षोऽपि न श्रीकण्ठस्येति स्पष्टम्। वस्तुतश्च श्रुतप्रकाशिकायामुल्लेखमात्रं न प्रश्नावकाशो भवतीति पूर्वमेवोक्तम् ॥

एवमत्र कथितानि विस्तरात् पूर्वपक्षकथितासु युक्तिषु ।
बाधकानि सुदृढानि तत्त्वतश्चिन्तयन्तु गतमत्सरा बुधाः ॥
तथा च रामानुजवर्यतोऽयं श्रीकण्ठशैव खलु सर्वथैव ।
पुरातनो नैव भवेदितीह जानन्तु सर्वेऽपि बुधा विमत्सराः ॥

[श्रीकण्ठभाष्यं श्रीभाष्यादर्वाचीनमेव]

आस्तां तावदिदं सर्वमिदं प्रथममुच्यताम् ।
किम्प्रमाणादयं नव्यः श्रीकण्ठो लक्ष्मणार्यतः ?

वत्स ! प्रशंसामस्तव धैर्यम्, यस्त्वमेतावताऽभिभूतोऽपि पुनः परि-पृच्छसि । शृणववधानेन ॥

(१) श्रीकण्ठशिवाचार्यस्यैव परानुकरणं अवर्जनीयं, न तु रामानु-जाचार्याणाम् ॥

(२) रामानुजार्यैः तत्प्राक्तनैर्वा इदं श्रीकण्ठभाष्यं कुत्रापि नोदाहारि ॥

(३) श्रीकण्ठभाष्य एव ' पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ' इत्यभिधानादिदं भाष्यं परिदृश्यमानभाष्येषु अन्तिममिति स्पष्टम् ॥

(४) श्रीभाष्ये शैववैष्णवकलहः न कुत्रापि प्रासञ्जि, श्रीकण्ठ-भाष्ये तु दृश्यते । ब्रह्मसूत्रप्रस्थाने शैववैष्णवकलहः रामानुजार्येभ्योऽर्वा-गेवेति विमर्शकाः ॥

(५) सर्वदर्शनसंग्रहे इदं दर्शनं न संगृहीतं । अत इदं ततोऽर्वा-चीनमेव ॥

(६) विशिष्टाद्वैततत्त्वं वैष्णवगृहसंवर्धितम् । शैवानां विशिष्टाद्वैत-कथायाः प्रसक्तिरेव नास्ति ॥

(७) प्राचीनस्य विशुद्धशैवमतस्य ब्रह्मसूत्राणां च परस्परं वध्यघा-तुकभाव एव । अतस्तद्भाष्यं अत्यन्तनवीनानामेव कुसृष्टिः ॥

(८) श्रीमद्रामानुजार्यकालपर्यन्तं केनापि भाष्यकारेणानुदाहृता उपनिषदः श्रीकण्ठभाष्ये उदाहारिषत ॥

(९) रामानुजार्यैरेव प्रापितप्रचारा नारायणपारम्यप्रतिपादनेदंपरा सुबालोपनिषत् श्रीकण्ठभाष्य उदाहारि ।

(१०) शङ्कराचार्याद्यनुदाहृता रामानुजार्यैरेवोदाहृता च 'ज्ञाना-त्मैवायं पुरुषः' इति श्रुतिः श्रीकण्ठभाष्ये दृश्यते ॥

(११) श्रीकण्ठभाष्ये रामानुजभाष्यदूषणमपि वर्तत इति तटस्था अभिप्रयन्ति ॥

(१२) श्रीकण्ठः हरदत्तानुयायीति दीक्षितेनोद्धुष्यते । हरदत्तश्च रामानुजार्यसमानकालिकः । तदनुयायी च रामानुजार्यादर्वाचीन एव ॥

(१३) पुरुषोत्तमगिरिधरप्रभृतयः प्राचीनास्तटस्थविद्वांसः श्रीकण्ठं रामानुजमतचोरं मुक्तकण्ठमेव प्रकाशयन्ति ॥

(१४) श्रीकण्ठभाष्यशैल्येव तस्यात्यन्तनवीनतां प्रकटयति ॥

(१५) तटस्था विमर्शकास्सर्वेऽपि श्रीकण्ठं रामानुजार्यादर्वाचीन-मेवैककण्ठ्येनावेदयन्ति ॥

एतावत् किन्नु पर्याप्तं तवोत्तरसमर्पणे ?
वत्स ! सन्धारयात्मानं मा मूर्छ, विरमाम्यहम् ॥

विवृणुमश्चैतानि यथाक्रमम्—

(१) ग्रन्थकाराणां परानुकरणे च निदानद्वयं वर्तते, स्वसंप्रदाय-तत्त्वपरिज्ञानोपायाभावः एकः, वाक्यरचनाकौशल्याभावश्चापर ॥

तत्र स्वसंप्रदायतत्त्वपरिज्ञानोपायाभाव कथमिव रामानुजार्याणा-मारोपयितुं शक्यः ? न हि रामानुजार्याणां विशिष्टाद्वैततत्त्वपरिज्ञानं श्रीकण्ठभाष्याध्ययनशरणम् । न वा रामानुजार्याणां विशिष्टाद्वैततत्त्वस्यो-पदेष्टार आचार्याः श्रीकण्ठस्येव पूर्वं नासन्नेव । ननु श्रीकण्ठस्यापि श्वेता-चार्यः पूर्वतनः तत्त्वोपदेष्टा आसीदेवेति चेत् ? कोयं श्वेताचार्यः ? किंकालिकः ? किंगोत्रः ? किंदेशः ? किंग्रन्थकः ? इति प्रश्ने आकाश एव खलु वीक्षणीयमायुष्मता ॥

अज्ञातकुलगोत्रोऽपि शिष्य एव वरो गुरोः ।
नामापि न श्रुतं तस्य गुरोः केनापि भूतले ॥

रामानुजार्याणां तु पूर्वतना आचार्याः यामुननाथमुन्यादय प्रामा-णिकगोष्ठीप्रसिद्धाः सिद्धित्रयादिग्रन्थग्रथयितारः मार्गदर्शका इति सर्वे-

सत्पुरुषसम्मतम्। नैवं श्रीकण्ठस्य पूर्वतनः कश्चित् तत्त्वोपदेष्टा प्रदर्शयितुं शक्यम्॥

ननु हरदत्तानुयायिनं श्रीकण्ठमाह दीक्षित शिवाद्वैतनिर्णये। हरदत्ताचार्यश्च श्रुतिसूक्तिमालादिग्रथयिताऽस्त्येव प्रसिद्ध श्रीकण्ठस्य मार्गदर्शकः? अतश्च कां न्यूनतां पश्यसि श्रीकण्ठे?

हन्त त्व शाम्बरीविद्यासंसिद्धया भृशगर्वितः।
सुदर्शनं ममाप्यस्ति चक्रपाणेरनुग्रहात्॥

किमयं हरदत्ताचार्य श्रीकण्ठस्य ब्रह्मसूत्रार्थयोजनाक्रमदर्शकः? उत सिद्धान्ततत्त्वप्रदर्शकः? नाद्यः; न हि हरदत्ताचार्यः ब्रह्मसूत्रार्थविवरणे कुत्रचित्प्रवृत्तः? प्रत्युत ब्रह्मसूत्रप्रस्थाने औदासीन्यमेव सूचयति सः। श्रुतिसूक्तिमालायाम्—

'वेदाः स्वयं भवतु वा यदि वा प्रणीतिः' (१०८)

इति श्लोके खलु पूर्वोत्तरमीमांसकानां विवादे स्वस्य कुत्रापि नैर्भर्यभावं सूचयति। ततश्च व्याससूत्रेष्वौदासीन्यमाविष्कृतम्॥

श्रुतिसूक्तिमालाव्याख्याता शिवलिङ्गभूपोऽपि स्वोक्तार्थोपष्टंभकतया पाणिनिजैमिनिसूत्राण्युदाहरन् तद्विशेषमेव कुत्रचित् ब्रह्मसूत्रमप्युदाजहार। न तु कुत्रापि स्वसिद्धान्तस्य व्याससिद्धान्तत्वमाविरकरोत्॥

युज्यते व्याससूत्रेषु शैवानां समुपेक्षणम्।
इत्येतत्कथयिष्यामोऽनुपदं तु सुविस्तरम्॥

ततश्चायं हरदत्ताचार्य श्रीकण्ठस्य ब्रह्मसूत्रार्थयोजनाविधौ न सर्वथा मार्गदर्शको भवितुमर्हति॥

नापि द्वितीय—प्रतीपगापी श्रीकण्ठः हरदत्तगुरोर्ध्रुवम्।
किं वाऽनुयायिशब्दोऽसौ तादृगर्थो भवद्गृहे॥

तथा हि—(क) श्रीकण्ठः खलु रामानुजमतवदेव विशिष्टाद्वैतवादी। यथाह दीक्षित एव 57 तमानन्दलहरीश्लोकावतरणिकायां 'अविशिष्टं ह्युभयत्रापि स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमिति कार्यकारणोभयावस्थ ब्रह्म विशिष्टाद्वैतरूपं सगुणं—इत्यादि सिद्धान्तवर्णनम्' इत्यादि। शिवाद्वैतनिर्णयेऽपि (25पुटे) शुद्धाद्वैते श्रीकण्ठ

परमतात्पर्यं वर्णयन् स्वग्रन्थतः श्रीकण्ठभाष्यं विशिष्टाद्वैतपरमित्येव न्यरूपयत्सः। एवञ्च श्रीकण्ठसिद्धान्तः व्यवहारदशा विशिष्टाद्वैतमेव, पारमार्थिकदशा शुद्धाद्वैतमेवेति भवदुक्तनिर्णयस्समजनि ॥

हरदत्तस्तु तदुभयमेव खण्डयति। विशिष्टाद्वैतवादः खलु जगद्ब्रह्मणोः शरीरशरीरिभावावलम्बनः, अत एवोपादानोपादेयभावावलम्बनश्च। तत्र 'विश्वं महेश्वर भवानधितिष्ठतीति विश्वात्मतामुपचरन्ति यदागमास्ते (श्रु-सू-मा-47) इति श्लोकेन हरदत्तः जगद्ब्रह्मणोः शरीरशरीरिभावं निराकरोति ॥

एवं—' अद्वैतमागमशिरोभिरुपासनाया-
मुक्तं तवेति परमार्थतया न वाच्यम्।
भेदः स्फुटो गरुडमान्त्रिकयोः, अलीकं
तादात्म्यभावनमथापि विष प्रशान्त्यै ' ॥ (135) ॥

इत्यत्र भेदस्यैव पारमार्थिकत्वं, अभेदस्यालीकत्वं च सुस्पष्टमाह हरदत्तः। शिवलिङ्गभूपोऽपि 'वेदान्तविहितमद्वैतमपि निराकरोति-अद्वैतमिति' इत्यवतारयन् अद्वैतवादं हरदत्तनिराकृतमावेदयति। अतश्च व्यवहारदशा परमार्थदशा च हरदत्तश्रीकण्ठयोः पूर्वपश्चिमागमित्वं दुरपह्नवम्

(ख) एवं—ईशानशब्द एव शिवे रूढः श्रीकण्ठविवक्षितः इति शिवार्कमणिदीपिकादौ दीक्षितः ॥ *

हरदत्तस्तु—शब्दोऽयमीश्वर इति श्रुतिगोचरस्सन्
आनीलकण्ठमवतंसितचन्द्ररेखम्।
त्वामेव बोधयति नाथ निजार्थपोषा-
दन्यं पुनः प्रकरणादिनिपीडनेन ॥ ४ ॥

इति श्लोके ईश्वरशब्दमेव शिवासाधारणं मनुते, न तु ईशानशब्दम्। 'शब्दस्तवायमभिधानं' इत्यनन्तरश्लोकेऽपि ईश्वरशब्दमेव शिवे रूढं स्थापयति। 'अयं ईश्वरशब्दः' इति च तद्व्याख्यायां शिवलिङ्गभूपः। ततश्च हरदत्तः श्रीकण्ठवत् स्वाभिमतं अर्थं ब्रह्मसूत्रेष्वारोपयितुं न प्रावर्ततेति स्फुटम् ॥

(ग) एवं—' नारायणपरं ब्रह्म ' इत्यत्र नारायणात् परं ब्रह्मेत्येवार्थः श्रीकण्ठसम्मतः ॥×

* (१ ३ २३) इत्यत्र ×' शब्दविशेषात् ' (१-२ ५) इति सूत्रभाष्यं द्रष्टव्यम्

हरदत्तस्य तु 'नारायणपरं ब्रह्म' इत्यत्र नारायणः परं ब्रह्म इति पदविभाग एवाभिमत , न तु नारायणात् परं इति तत्पुरुषः ॥

ब्रह्मोच्यते परमसौ परमं च तत्त्वं
ज्योति परं च परमेश्वर पद्मनाभः ।
त्वद्ध्यावनैकरसिकः त्वदनन्यभावात्
मन्त्री यथा गरुडभावनया गरुत्मान् (४२) इति हि हरदत्तः ॥

अत्र शिवलिङ्गभूपालः—'ननु नारायणस्योपास्यत्वे 'नारायणपरं ब्रह्म' इत्यादिवाक्येन तस्य परब्रह्मत्वाद्युपास्यधर्माभिधानं न सङ्गच्छत इत्यत आह—ब्रह्मेति । ध्यातृध्येयविवेकरहितसमाधिलक्षणध्यानावस्थायां त्वदैक्यारोपात्-गरुडभावनया गरुत्मन्तं मन्यमानो मन्त्री गरुत्मानिव परं ब्रह्मेति परमं तत्त्वमिति परं ज्योतिरिति चोच्यते । 'नारायणपरं ज्योतिः' 'नारायणपरं ब्रह्म' इत्यत्र छान्दसो विभक्तिलोपः' इति । अत्र केचित् अव्युत्पन्नाः पूर्वापरविरोधं मूलविरोधं चानवलोकयन्तः 'छान्दसो' इत्यस्य स्थाने 'ङसे' इति पाठं प्रकल्प्य तुष्यन्ति । तुष्यन्तु काममल्पप्रज्ञा ॥ *

परन्तु 'नारायणः परं ब्रह्म' इत्येव पदविभागः हरदत्तशिवलिङ्गभूपयोः सम्मत , श्रीकण्ठस्य तु नारायणात् परं ब्रह्मेति समासः ॥

तदनेन हरदत्तः प्रामाणिकजुगुप्सितां पदवीं नाध्यारोहदिति स्पष्टम्। तत्प्रतीपं गच्छन् अयं श्रीकण्ठः हरदत्तानुयायी कथं वा स्यात् ?

ननु भोः 'शब्दविशेषात्' इति सूत्रशिवार्कमणिदीपिकायां हि दीक्षितः 'तात्पर्यसंग्रहे त्वाचार्यैः नारायणेत्येतद्भिन्न पदमिति प्रौढिवादेनाभ्युपगम्य नारायणस्य परब्रह्मत्वादिकं विश्वपतित्वादिकमिवोपास्यगतमेव तदभेदभावनादार्ढ्यसिद्धमुपन्यस्तमित्युपपादितं-'ब्रह्मोच्यते परमसौ+गरुत्मान्' इति' इति स्पष्टं हरदत्तश्रीकण्ठयोर्विरोधं पर्यहरदेव । त्वं तु सर्वमपि कूलंकषमपरिशील्य स्वैरं वदसि ?

हन्त ! उत्तरं सुलभं ह्येवं स्वानिष्टं यदि कथ्यते ।
निर्णेतुं नैव शक्येत सिद्धान्तः कोऽपि कुत्रचित् ॥

* मैसूरुकोशागारीय २६७ अङ्कितमातृकायां प्रामाणिक एव पाठो निविष्टः । ४०८९ तममातृकायां एव पाठो लिखितः

अपि च—महात्मन् ! न वयं शक्ताः श्लाघितुं तव चातुरीम् ।
प्रदर्शय त्वत्पाण्डित्यं क्षणगोष्ठीषु निर्भयः ॥

एवमत्र हरदत्तोक्तेर्भ्रमवादितां वदन्नयं दीक्षितः ज्योतिरधिकरण-शिवार्कमणिदीपिकायां—(१-३-४१) उक्तं हरदत्तश्लोकमुपादाय तस्यैव मुख्यसिद्धान्तत्वमवर्णयदित्यहो विचित्रम् !

ननु, 'शास्त्रदृष्ट्या तु' (१-१-३१) 'प्रकाशश्च कर्मणि' (३-२-२४) इत्यादावैक्यभावनाश्रीकण्ठपक्षे भाष्येऽङ्गीकृत एव । 'नारायणपरं ब्रह्म' इत्येतद्विषये परं हरदत्तोक्तेर्भ्रमत्वमभिमतमिति को दोष इति चेत्—

न कोऽपि दोषो महात्मन् तव दुरभिनिवेशान्ध्यादृते । 'ब्रह्मोच्यते परमसौ' इत्यादिश्लोकस्तु 'नारायणपरं ब्रह्म' इति श्रुत्यर्थनिर्धारणायैव प्रवृत्त इति स्मर बृहस्पते ! किञ्च प्रधानप्रमेयेष्वेव श्रीकण्ठहरदत्तयोः पूर्वपश्चिमगामित्वमस्माभिः प्रदर्श्यते, नास्त्यैकमत्यमेकस्मिन्नपीत्यपि स्मर ॥

परोक्तरीत्या श्रुतिसूक्तिमाला सर्वापि किं संग्रथिता महात्मन् !
कस्तर्हि पक्षो हरदत्तसूरेः ? किं वा प्रमाणं भवदुक्तितोऽन्यत् ॥

शिवकर्णामृते हि भवद्दीक्षित एव पूर्वोक्तहरदत्तपक्षमेव मुख्यसिद्धान्तत्वेन स्वाभिमतं प्रदर्श्य 'नारायणात् परं ब्रह्म' इति निर्वाहः पाशुपतसम्मत इति व्यलिखत् * । तेन च पाशुपतनिर्वाहः न हरदत्तसम्मतः, न वा स्वस्येति स्पष्टमुक्तं भवति दीक्षितेनैव । अतश्च 'नारायणपरं ब्रह्म' इति श्रुत्यर्थविषये श्रीकण्ठः सर्वथा न हरदत्तानुयायी ॥

(घ) एवं—ब्रह्मैव जगन्निमित्तं जगदुपादानं चेति श्रीकण्ठपक्षः । केवलनिमित्तकारणतामात्रवादिशैवैकदेशिमतनिराकरणपरं पाशुपताधिकरणमिति श्रीकण्ठभाष्यशिवार्कमणिदीपिकयोरुद्घोषः (२-२ ३५) ॥

हरदत्तस्तु—' विश्वाधिकस्त्वमसि विश्वमयो मुरारिः
यज्ञेश्वरस्त्वमसि यज्ञममुं गृणन्ति ।
आद्या जगत्प्रकृतिरेष भवान्निमित्तं
आतः कथं नु भगवन् उभयोरभेदः ?' (45)

इत्यत्र शिवो निमित्तमात्रं, विष्णुरेव चोपादानं इति स्पष्टमाह ॥

* श्रीरङ्गमुद्रितशिवकर्णामृतस्य ५०—५५ पुटा द्रष्टव्याः ।

ननु प्रकृत्यधिकरणादौ श्रीकण्ठभाष्येऽपि शिवशक्त्यंशभूतस्य विष्णोरेवोपादानत्वं प्रसाधितमेव । ततश्च सिद्धमैकरस्यमिति चेत्—

कं वा वञ्चयसि सुधीमणे ! किं तर्हि निमित्तोपादानभेद एव श्रीकण्ठसम्मत ? तथा सति पाशुपताधिकरणश्रीकण्ठभाष्यशिवार्कमणिदीपिके ज्वलने प्रक्षिप ॥

'वयं तु वेदशिवागमयोः' इत्यादिना श्रीकण्ठप्रदर्शितव्याख्यानान्तरेऽपि 'इदमधिकरणं केवलेश्वरनिमित्तत्ववादिहिरण्यगर्भोक्तयोगस्मृतिविषयम्' इति श्रीकण्ठोक्त्या केवलनिमित्तत्वपक्षः निराकार्यैव । ततश्च शिवशक्त्यंशभूतनारायणस्योपादानत्वेऽपि शिवस्यापि मुख्यमुपादानत्वं कथञ्चित् वर्णनीयमेव । वर्णयति च दीक्षितस्तथैव प्रकृत्यधिकरणादौ ॥

हरदत्तस्तु विष्णुं उपादानमुक्त्वा 'अत उभयोरभेदः कथं ?' इति शिवः केवलनिमित्त एव न सर्वथोपादानं इत्यसिद्धान्तयत् । ततश्च श्रीकण्ठः न केवलं हरदत्तानुयायी , प्रत्युत हरदत्तखण्डक एव ॥

(ङ) एवं—शिवस्य जगदनुपादानत्वात् 'सर्वो वै रुद्रः' इत्यादिवाक्यावगतं सामानाधिकरण्यं औपचारिकमेव हरदत्तसम्मतम् ॥

'विश्वं महेश्वर ! भवानधितिष्ठतीति
विश्वात्मतामुपचरन्ति यदागमास्ते ।
तत्पण्डिता विदितवेदरहस्यशीलाः
जानन्ति मूढमतयस्तु न वेद सत्यम्' ॥ (४७)

इत्यत्र हि 'सर्वो वै रुद्रः' इति व्यपदेश शिवाधिष्ठितत्वात् उपचारादिति कण्ठत आह सः । एतत्पूर्वतने श्लोके—

'विश्वात्मन श्रुतिषु विश्वपतित्ववाद
सङ्कुच्छते स्तुतितयैव रथाङ्गपाणेः' ॥ (४६)

इत्यत्र विष्णुपराणां 'पुरुष एवेदं सर्वम्' इत्यादिवाक्यानां मुख्यत्वं 'नारायणपरं ब्रह्म'-इत्यादीनामौपचारिकत्वं चोक्तम् । तत्र च व्याख्यायां शिवलिङ्गभूपः—'छायातपयोरिवान्योन्यं विश्वात्मत्वविश्वपतित्वयोरेकत्र समावेशासंभवात्' इति तत्र हेतुमाह ॥

एवञ्च विश्वात्मत्वं विश्वपतित्वं चेत्युभयं सर्वथा नैकनिष्ठं भवितुमर्हतीति हरदत्ताशयः स्फुटः । तत्र विश्वात्मत्वं उपादानत्वकृतम् ,

विश्वपतित्वं च निमित्तत्वकृतम् । तथा च जगद्ब्रह्मणोः तन्मते उपादानोपादेयभावानङ्गीकारात् तत्कृतं सामानाधिकरण्यमप्यसंभवीति रुद्रस्य विश्वाधिष्ठातृत्वात् विश्वात्मतामुपचरन्ति वेदा इत्यभ्यधात्स ॥

श्रीकण्ठस्य तु उपादानोपादेयभावकृतं सामानाधिकरण्यमेव विवक्षितमिति दीक्षितः वादनक्षत्रमालादिषु साधयति (पुट-२३१) । वादनक्षत्रमाला हि श्रीकण्ठभाष्यशेषभूतेति स्पष्टं वदति दीक्षितः उपक्रमे 'यत् सिद्धवद्व्यवहृतं ध्वनितं च भाष्ये । तस्य प्रसाधनमिह क्रियते' 'शेषीभवदपि भाष्ये' इत्यादिना । अत्र भाष्यपदेन श्रीकण्ठभाष्यमेव विवक्षितम् । एवं जगद्ब्रह्मणोः शरीरशरीरिभावनिबन्धनं तत् मुख्यं सामानाधिकरण्यमित्यपि निरूपयति सः तत्रैव (२३३-पुट) ॥

तदधिष्ठितत्वं तु न तच्छरीरत्वगमकं, सारथ्यधिष्ठितं रथः किं तस्य शरीरम्? पाशुपताधिकरणप्रतिक्षेप्यशैवमते हि कुलालादेर्मृत्पिण्डाद्यधिष्ठातृत्ववत् ईश्वरस्यानुपादानस्यैवाधिष्ठातृत्वं भवदीयभाष्य एव वर्णितम् । तत्रत्यशिवार्कमणिदीपिकायामपि 'अधिष्ठातृत्वोपादानत्वयोरेकत्रासंभव इति प्रत्यवस्थानम्' इत्युक्तम् । इदमेव मतं हरदत्तेनापि वर्णितम् । अतश्च जगद्ब्रह्मणोरुपादानोपादेयभावः, शरीरशरीरिभावश्च न सर्वथा हरदत्तसम्मत इति तन्मते सामानाधिकरण्यमौपचारिकमेव ॥

विशिष्टाद्वैतवादस्य खलु उक्तोभयमेव प्राणभूतम् । तदेतदनङ्गीकुर्वन्तं हरदत्तं विशिष्टाद्वयवादी श्रीकण्ठः अनुगच्छतीति वदन् भवद्दीक्षित कथं विश्वसनीय इति चिन्तय ऋजुमते!

भ्रान्तः किं दीक्षितोऽयं स्यादथवा विप्रलंभक ।
वयं जिज्ञासवस्तत्त्वं, कथय त्वं महामते!
द्वेधाऽपि दीक्षितोऽयं स्यादनाप्तः तत्त्वकाङ्क्षिणाम् ।
विप्रलंभक एवायमिति पश्चान्निरूप्यते ॥

यथाऽन्वगादप्पयशैव एषः श्रीशङ्करार्यानिह वैष्णवाग्रयान् ।
तथाऽन्वगच्छद्धरदत्तमेनं श्रीकण्ठशैवोऽयमितीह युक्तम् ॥

अप्पय्यदीक्षितस्यास्य पश्यन्त्वार्जवमञ्जसा ।
युज्यते च द्विजिह्वानां प्रकृत्या जिह्मगामिता ॥

तथा च सिद्धान्ततरपरिज्ञानोपाय श्रीकण्ठस्य शशशृङ्गायित एव॥

न चेदृशी दुर्गतिरस्ति वस्तुतो रामानुजार्यस्य जगद्धितैषिणः ।
विगाहतः पूर्वतनैर्महर्षिभि बोधायनाद्यर्हतकण्टकां स्मृतिम् ॥

[बोधायनवृत्ति.]

ननु भोर्वैष्णवस्यैवं कं जनं? किमु पामरम्?
बोधायनस्य वृत्तिर्हि शशशृङ्गायते भुवि ॥

किमित्येवं मन्यते भवान् बृहस्पतिसदृशप्रज्ञः? किमिदानीमनुपलम्भमात्रात्? उत बोधायनस्य शिवभक्तत्वेन वैष्णवजनसम्मतविशिष्टाद्वैतसिद्धान्तप्रवर्तकत्वानुपपत्तेः? अथवा भवदनिष्टावहत्वात्?

नाद्यः—एवं तर्ह्युपवर्षादिवृत्तेरपि जलाञ्जलिः ।
प्रामाणिकगृहीतत्वं ह्युभयत्रापि दृश्यते ॥

अस्त्वस्मदीय परिग्रहः; भवदीयैरेव उट्टङ्कितेयं बोधायनवृत्तिः । तथा ह्युक्तं प्रपञ्चहृदये—'तत्र साङ्गोपाङ्गस्य वेदस्य पूर्वोत्तरकाण्डसंभिन्नस्याशेषवाक्यार्थविचारपरायणं मीमांसाशास्त्रम् । तदिदं विंशत्यध्यायनिबद्धम् । तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम् । तदन्यदध्यायचतुष्कं उत्तरमीमांसाशास्त्रं उत्तरकाण्डस्य ब्रह्मविचारपरायणं व्यासकृतम् । तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम् । तत् ग्रन्थबाहुल्यभयादुपेक्ष्य किञ्चित् सङ्क्षिप्त उपवर्षेण कृतम्' इति ॥

अत्र च ग्रन्थे पूर्वोत्तरमीमांसाग्रन्थकाराणां परिगणनावसरे भास्करपर्यन्ता एवाचार्या उल्लिखिताः । तेन चायं ग्रन्थः श्रीमद्रामानुजाचार्येभ्यः प्राचीन इत्यत्र न संशयलेशस्याप्यवसरो निर्मत्सराणाम् । ग्रन्थस्य शैली विषयप्रतिपादनक्रमश्च द्रढयत्येव चेममर्थम् । एतादृशेऽपि ग्रन्थे बोधायनकृतव्याससूत्रविवरणस्योल्लेखात् भवदीया एव प्रष्टव्यास्त्वया ॥

स्वानिष्टावहत्वात् तदेतस्मिन् प्रपञ्चहृदयग्रन्थे कर्तृनामानुपलंभं व्याजीकृत्य तत्प्रामाण्ये विसंवदेरन् यद्यपि केचिदाग्रहिणोऽद्वैतिनः, तथाऽपि श्रीरामानुजाचार्येभ्यः प्राचीने अद्वैतिविरचितेऽस्मिन् ग्रन्थे बोधायनवृत्तिरुल्लिखितेतीदमवधेयं निर्मत्सरैः विमर्शकविचक्षणैः ॥

ननु त्रिकाण्डशेषादौ 'उपवर्षो हलभूतिः कृतकोटिरयाचितः' इत्यत्र कृतकोटिशब्दस्योपवर्षपर्यायत्वदर्शनात् ग्रन्थपरत्वपरं उक्तवाक्यमविश्व

सनीयमिति चेत्—तत्तद्ग्रन्थप्रवचनपरायणत्वादिभिः पुरुषस्यापि तत्तद्ग्रन्थनाम्ना 'श्रीभाष्यं श्रीनिवासाचार्यः' इत्यादिरीत्या व्यवहारो हि बहुलमुपलभ्यते । किं बहुना? ग्रन्थेष्वादरातिशयात् पुरुषाः स्वसुतान् ग्रन्थनाम्नैव समाह्वयन्ति । दृश्यते हि—श्रीभाष्यमैय्यङ्गार्, भाष्याचार्यः, इत्यादि नाम पुरुषाणाम् * । तथा प्रकृतेऽपि कृतकोटिप्रवक्तृकत्वात् उपवर्षोऽपि कृतकोटिनाम्ना व्यवहृत इति ग्रहणे कं बाधकं पश्यति भवान्?

अथैवमपि कृतकोटिपदस्य ग्रन्थनामत्वे मणिमेखलादिग्रन्थविरोध । तत्र हि २७ गाथायां कृतकोटिः ग्रन्थकार इति निर्देशि इतिचेत्-किमेवं बुद्धिसङ्कोचस्तव । अमरपदादिकं हि ग्रन्थे तत्कर्तरि च बहुलं प्रयुज्यते । तद्वत् प्रकृतेऽपि कृतकोटिपदेनोभयोरपि व्यवहारः कुतो न युज्यत इत्यालोचय । अथ वा पूर्वोक्तदिशा कृतकोटिसंज्ञकः अन्य एव यः कश्चित्तत्रोल्लिखितः स्यात् † ॥

परन्तु ग्रन्थे, ग्रन्थकारे, तदनुयायिषु च एक एव शब्दः लोके बहुलं प्रयुक्तचर एव । अतः स्वेच्छया किञ्चिन्निषेद्धुं न कथञ्चिदपि शक्यम् ॥

बोधायनस्य शैवस्य श्रीवैष्णवसम्मतविशिष्टाद्वैतमतप्रवर्तकत्वमसंभवीत्येतदपि न क्षोदक्षमम् ॥

बोधायन शैव इति कथमवगतं धीमता? तत्प्रणीतधर्मशास्त्रे शिवपूजायाः कथनादिति चेत्, किं विष्णुपूजा नाभिहिता तेन? विष्णुपूजाभिधानेऽपि शिवपूजां कथितवतः विष्ण्वैकान्त्यं तस्य गतमेवेति चेत्—

** आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥

इति शपथयन् व्यासः किं शिवमहिमादिकं न वर्णयामास?

---

* दाक्षिणात्येषु दानपुरे भाष्यस्वामीति जगद्गुरुर्जयत्रयात्राविलासग्रन्थकर्ता प्रथितोऽद्वैत्यप्यस्तीति द्रष्टव्यम् ॥

† युक्तं चैतत् । द्राविडभाषामय्यां मणिमेखलायां हि तस्यामेव गाथायां व्यासः प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यस्वभावपरिशेषरूपप्रमाणदशकवादीत्युच्यते । अतस्तत्रोल्लिखितः व्यासः ब्रह्मसूत्रकर्तृव्यासादन्यः स्यादिति विमर्शका अभिप्रयन्ति । एवं कृतकोटिरपि कुतो वा न स्यादिति चिन्तनीयम् ॥

** अयं श्लोकः सहस्रनामभाष्ये शङ्कराचार्यैरप्युदाहृतः ॥

लोकेऽस्मिन् विविधाधिकारिनिचिते भिन्ने पुमर्थे रुचेः
भेदात्, तत्प्रतिपादका हि निगमा राजन्ति नानाविधाः ।
एवं लोकहितैषिणश्च मुनय श्रद्धानुरूपं नृणां
मार्गान् सर्वपुमर्थसाधनकृते नानाविधानब्रुवन् ॥

अतोऽत्यल्पमेतत् । त्यक्त्वा सङ्कुचितां बुद्धिं अवलोकय ॥

भवदनिष्टावहत्वात् निह्नूयते चेत् बोधायनवृत्तिः निह्नोतु भवान्, न वयमुपरुन्ध्मः यथा कथञ्चित् तृप्यन्तं भवन्तम् ?

परं त्विदं सम्यगवेहि साधो ! सर्वं त्वदिच्छानुगुणं न सिद्ध्येत् ।
आकाङ्क्षते सर्वजगद्विनाशं क्षीरं पीपासुः कपटो बिडाल ॥

ननु यदि नाम बोधायनवृत्तिर्वस्तुसती तर्हि रामानुजैः कुतः कतिपयान्येव वाक्यान्युपात्तानि इति चेत् ? किं तर्हि बोधायनवृत्तिस्समग्रैवोदाहर्तव्या तव ? ग्रन्थरचनाप्रकारानभिज्ञचोद्यमिदम् ॥

वस्तुतस्तु—रामानुजार्योपात्तानि वृत्तिवाक्यानि यदि नाम स्वकपोलकल्पितानि स्युस्तदा सर्वथा सुस्पष्टार्थानि बहून्येतादृशानि वाक्यानि उपादीयेरन्, यथा वा उमामहेश्वरशास्त्रिणा तत्त्वचन्द्रिकायामुपपुराणवचांस्युपादीयन्ते । अतः कतिपयवाक्यग्रहणमेव तस्या कल्पितत्वं वारयत्येव । अधिकमप्रसक्तमत्र ॥

ततश्च बोधायनविरचितवृत्तिग्रन्थ , यामुनार्यप्रणीतसिद्धित्रयादिश्च श्रीमद्रामानुजाचार्याणां स्वसंप्रदायपरिज्ञानोपायः वर्तत एव । न हि तादृशो ग्रन्थः श्रीकण्ठस्य कश्चन प्रदर्शयितुं शक्यो भवद्गुरूणापि ॥

अत एव खलु भवद्गुरु हरदत्तातिरिक्त श्रीकण्ठसंप्रदायप्रदर्शकं प्रदर्शयितुं नाशकत् । तत्तु दूरतो निरस्तमनुपदमेव ॥

एतेनेदमत्र निष्पन्नं—स्वसंप्रदायपरिज्ञानोपायपौष्कल्यं रामानुजार्याणामेव ; श्रीकण्ठस्य तु न तल्लेशतोऽपीति श्रीकण्ठस्यैव परानुकरणपरायणत्वं अवर्जनीयमिति ॥

एवं ग्रन्थरचनाकौशल्याभावः परानुकरणे यो हेतुरुक्तः सोऽपि श्रीकण्ठमेव समालिङ्गति, न रामानुजार्यान् स्प्रष्टुमप्यलम् । रामानुजार्या हि गीताभाष्य दीप-सार-वेदार्थसंग्रहादिग्रन्थनिर्मातारः प्रथन्ते । श्रीकण्ठेन

तु नान्यः कश्चन ग्रन्थः व्यरचि। अतो ग्रन्थरचनाकौशल्याभावः श्रीकण्ठस्यैव स्यात् , न तु रामानुजार्याणाम् ॥

ननु श्रीकण्ठकृतं गीताभाष्यं आन्ध्रदेशमुद्रितं किं न दृष्टचरं मेधाविना भवता ? न केवलं दृष्टचरं महात्मन् ! अक्षरशः परिशीलितचरं च। परन्तु तत् शुद्धाद्वैतपरं प्रकृतश्रीकण्ठब्रह्मसूत्रभाष्यस्यात्यन्तविरुद्धमेव । अत इदं गीताभाष्यमर्वाचीनेन केनचित् श्रीकण्ठनाम्नि प्रापितप्रचारं , न प्रामाणिकम् । भेदद्यामश्च तद्रहस्यमुत्तरत्र सप्रमाणम् ॥

अत परानुकरणहेतुपौष्कल्यं श्रीकण्ठस्यैव , न रामानुजार्याणामित्यवगच्छ साधो !

[प्राचीनेन केनापि श्रीकण्ठभाष्य नोल्लिखितम्]

(२) ग्रन्थकाराणामियं रीतिः साधारणी—यत् स्वविरुद्धाशयवतां स्वपूर्वतनग्रन्थकाराणां सिद्धान्तनिराकरणमिति । अन्यथा हि स्वोक्तार्थः कथं प्रतिष्ठितो भवेत्। तत्रापि मतप्रवर्तकानामाचार्याणां स्वमतप्रतिष्ठानाय परमतदूषणमवर्जनीयम् । तत्तादृब्महर्षिप्रणीतब्रह्मसूत्रेषु तर्कपाद एवात्र पर्याप्तं निदर्शनम् । सर्वजनविदितेऽस्मिन् नाधिकं व्यापृतव्यमस्माभिः ॥

प्रकृते चेदं श्रीकण्ठभाष्यं प्राचीनैः शङ्करभास्कररामानुजाद्यैर्भाष्यकारैः कुतो वा कुत्रापि नानूदितं , न निराकृतं चेति वदतु भवान्। ननु शिवाद्वैतनिर्णयादौ शङ्कराचार्यश्रीकण्ठयोरैकरस्यसमर्थनात् , भास्करेण श्रीकण्ठभाष्यसरणस्य पूर्वपक्ष एव कथितत्वात् , श्रीकण्ठभाष्यानुकर्तुः रामानुजाचार्यस्य तद्गोपनस्यावश्यकत्वाच्च त्वदुक्तिर्गलहस्तितेति चेत्—

> भवादृशैः बहिष्कारं भूषणं मन्महे वयम् ।
> प्रामाणिकजनैर्दूरे यतो यूयं बहिष्कृताः ॥

दीक्षितमर्मभेदनमचिराद्भविष्यति भोः! इतरच्च सर्वं विचारितमपि पूर्वमेव किमेवं विस्मरसि ?

> निपीयतां वत्स ! मतिप्रवर्धकं ब्राह्मीघृतं विस्मरणप्रणाशनम् ।
> निषेव्यतां वा सकलप्रवर्तकः सदा हृषीकेश इह द्वयीगतिः ॥

भो महात्मन् अस्त्विदम् । रामानुजार्यादनन्तरकालिकैः वैष्णवाग्रेसरैः आनन्दतीर्थादिभिर्वा कुत इदं भाष्यं कुत्रापि न स्मृतमपीति वक्तव्यं

बृहस्पतिना त्वया । न हि ते भवद्दृशाऽपि श्रीकण्ठभाष्यानुकर्तार , तथा सति हि रामानुजार्यैरिव नैरपि श्रीकण्ठः प्रच्छादनीयः स्यात् ॥

ननु श्रीकण्ठभाष्येऽपि रामानुजभाष्यानुवादादर्शनात् कथमिदं भाष्यं रामानुजभाष्यादर्वाचीनं स्यादिति चेत्—तर्ह्येतत् परिदृश्यमानेषु भाष्येषु कस्याप्यनुल्लेखात् परिदृश्यमानसर्वभाष्यापेक्षया प्राचीनतमं स्यात्। सत्यं तथैव । यदि च मदुक्तौ संशेते भवान् तर्हि शिवार्कमणि-दीपिकाभूमिकायां हालास्यनाथशास्त्रिवचनं वा विलोकयतु * इति चेत्-अभिनन्दनीय एव भवतां शैवाद्वैतिनां श्रीकण्ठे भक्त्यतिशयः—

श्रीकण्ठशैवोऽयमतीव भाग्यवान्
यस्याभवन् शिष्यवरास्तु शाङ्कराः ।
न हीदृशं भाग्यमुपार्जितं परैः
श्रीशङ्कराद्यैरपि भाष्यकारैः !

अयि भोः! एवं सति भवदीयं भाष्यं शङ्करभाष्यापेक्षया परं प्राचीनं न स्यात् , किन्तु सकलवाङ्मयेभ्योऽपि प्राचीनं स्यात् । न हि श्रीकण्ठ-भाष्ये कस्यापि ग्रन्थस्य ग्रन्थकारस्य वा नामगोत्रादिकं कुत्रापि उदलेखि॥

अस्तु तथैव का हानिर्नः इति चेत्—न हान्यभावमात्रं, प्रत्युत 'पूर्वा-चार्यैः कलुषितं' इत्याक्रान्दति श्रीकण्ठे तद्भाष्यं चतुर्मुखेनैव साकं जग-त्यामवतीर्णमिति जल्पतस्तवोन्मत्तस्य साधूनामनुकम्पालाभोऽपि ॥

परन्तु भवन्तं भवद्गुरुर्दीक्षित एव नानुमनुत इतीदमेव शोक-स्थानम् । तथा हि वदति दीक्षितः—'नन्वेवं उक्तरीत्या ब्रह्मसूत्राणां सगु-णब्रह्मविचारार्थत्वमप्यस्तीत्याविष्कृतवद्भिः शङ्कराचार्यैरेव सगुणमपि ब्रह्म स्वरूपप्रमाणसाधनैर्विचारितं चेत् किमर्थं सगुणविषये श्रीकण्ठाचार्यैं भाष्यान्तरं कृतम् ? अत्र ब्रूमः— शङ्कराचार्यैस्सगुणब्रह्मसद्भावमात्रं निरू-पितं, न तु तत् परमशिव एवेति विष्ण्वादिदेवतान्तरत्वशङ्कानिरासेन निर्णीतम् तदर्थं त्रिमूर्त्युत्तीर्णः परमशिव एवात्र शास्त्रे प्रतिपाद्यं सगुणं ब्रह्मेत्यस्मिन्नर्थे वेदान्तानां न्यायतः सामरस्यमुपपादयितुमाचार्यैं पृथक्भाष्यमारब्धम्' इति × ॥

* 'आदिममप्यन्येषा त्रयाणा इदं श्रीकण्ठ शैवाद्वैतपर भाष्यम्' इति हालास्य-नाथशास्त्रिणाभिहितम् ॥ × शिवाद्वैतनिर्णयस्य ७६ पुटे.

एवं च श्रीकण्ठभाष्यस्य शङ्करभाष्यादर्वाचीनत्वं स्पष्टमुद्घोषि दीक्षितेन। शङ्करभाष्येण हि श्रीकण्ठभाष्यचारितार्थ्यमाक्षिप्य समाहितं, न तु श्रीकण्ठभाष्येण शङ्करभाष्यचारितार्थ्यम्। एवञ्च किं दीक्षितः प्रामाणिक ? उत हालास्यनाथशास्त्री ?

यत्र यत्र हि निधीयते पदं तत्र गर्तमिह पश्य भीकरम्।
कापथं हि परिहृत्य दूरतः गम्यतां विगतकण्टकेऽध्वनि ॥

अतश्चाप्पयदृष्ट्या श्रीकण्ठभाष्यं शङ्करभाष्यादर्वाचीनं सदपि कुतो वा कुत्रापि न भूषितं न दूषितं वा? इति प्रश्ने कं समाधिमातिष्ठेत भवान्!

अतश्च बुद्धिपूर्वकमेव स्वग्रन्थस्य कालेयत्ताज्ञानपरिहारे प्रवृत्तस्य श्रीकण्ठभाष्यकर्तुः रामानुजभाष्यस्याप्यस्मरणं न तत प्राचीनतां गमयेत्।

ततश्च रामानुजयोगिभिर्वा तत्प्राक्तनैर्वाऽप्यनुदाहृतत्वात्।
श्रीकण्ठभाष्यं किल लक्ष्मणार्यभाष्यान्नवीनं प्रवदन्ति सन्तः ॥

[श्रीकण्ठभाष्यस्यातिनवीनत्व तत्रैवोत्कीर्तितम्]

(३) 'व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने।
पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥'

इति श्रीकण्ठभाष्योपोद्घातगतं पद्यमपि अस्य भाष्यस्य सर्वभाष्यापेक्षयाऽप्यर्वाचीनत्वं स्पष्टमावेदयति। 'पूर्वाचार्यैः' इति बहुवचनं 'कलुषितं' इति पदं च न केवलं द्वित्राणां, अपि तु बहूनां ब्रह्मसूत्रभाष्याणामतीतत्व एव संगच्छते। दीक्षितदृष्ट्या शङ्करभाष्यस्यैकस्यैवातीतत्वे कथमिदं पदद्वयं घटताम्? यदि चेदं हालास्यनाथशास्त्रिदृष्ट्या सर्वेषामप्याद्यं भाष्यं स्यात्? तदा तु न सुतराम् ॥

दीक्षितोऽपि शिवार्कमणिदीपिकायां उक्तश्लोकव्याख्यानावसरे पूर्वाचार्यैः कलुषितमित्यस्य निदर्शनतया रामानुजभाष्यमेवोदाहरति। ततश्च तेनैव श्रीकण्ठभाष्यस्य श्रीभाष्यादर्वाचीनत्वं प्रतिष्ठापितमेव ॥

ननु आमूलाग्रमपरामृशन् शिवार्कमणिदीपिकां किमेवं भुजमास्फालयसि? भवदुक्तप्रबन्धक एवोपसंहारे 'एवमर्वाचीनभाष्यप्रणेतॄणां

ये पूर्वपूर्वोपदेष्टार आसन् तानुद्दिश्य पूर्वाचार्यैः कलुषितमित्युक्ति ' इति दीक्षितैः स्पष्टमेवोक्तं–उक्तश्लोके न रामानुजार्या विवक्षिताः ; किन्तु तत्पूर्वाचार्या एव , ये च भाष्यप्रणयने रामानुजार्याणां मार्गदर्शका अभूवन् इति । अत्र कमाक्षेपं पश्यसि त्वम् ?

वत्स ! दर्शय भवादृशां महाज्ञानिनां सदसि चातुरीं तव !
नोऽवगन्तुमितरे हि शक्नुयुश्चातुरीं तव , ऋजौ पथि स्थिताः ॥

रामानुजार्याः स्वपूर्वाचार्यप्रदर्शिताध्वनैव स्वभाष्यं प्रणिन्युरिति वदन्नेव त्वं कथं रामानुजार्यान् श्रीकण्ठानुयायिनो निन्दयसि ?

चैद्यादिवत् साधुजनस्य निन्दा कि तेऽतिमात्रम् स्वदते महात्मन !
सतां कृपायास्समवाप्त्युपायो गवेषितः किं दुर्लभस्त्वयाऽद्य ?

अत्रेदमवदधतु सर्वेऽपि निर्मत्सरा विद्वांसः । ' पूर्वाचार्यैः कलुषितं ' इतिपदश्रवण एव श्रीकण्ठभाष्यात्पूर्वं बहूनां भाष्याणां सत्त्वं स्वत एव धियमारोहेत्सर्वेषाम् । दीक्षितस्तु तत्र निदर्शनतया रामानुजभाष्यमेकमेव प्रदर्शयति । निर्मत्सरेण प्रामाणिकेन व्याख्यात्रा हि मूलगतबहुवचनाद्यनुसारेण अन्यान्यपि भाष्याणि स्थालीपुलाकन्यायेन वा प्रदर्शनीयान्येव । तत्सर्वं परित्यज्य रामानुजभाष्यमेकं प्रदर्श्य ' पूर्वाचार्यैः कलुषितं ' इति पदसंघातं व्याख्यातमभिमन्यमानेन दीक्षितेन वैष्णवेषु कियान् प्रद्वेषः प्रादर्शीति चिन्तयन्तु ॥

तत्रापि ' सर्वोपेता च तद्दर्शनात् ' इति सूत्रयोजनां रामानुजभाष्यप्रदर्शितां दूषयन् दीक्षितः शङ्कराचार्यानपि अदूषयदेव , न हि तत्सूत्रार्थयोजनविषये शङ्कररामानुजयोराशयभेदः ॥

ननु समनन्तरमेव शङ्करभाष्यं समर्थितमेव तेनेति चेत् , किमिदं रामानुजभाष्यविषये परं काकभक्षितम् ? अधिकमप्रसक्तमत्र ॥

एवं वैष्णवविद्वेषप्रमुषितमतिः रामानुजार्यदूषणौत्सुक्येन शङ्कराचार्यानपि दूषयित्वा पुनरपि शङ्करभाष्यसमर्थनाय वृथा क्लेशमनुभवन्नयं दीक्षितः सतामुपहास्य एव ॥

विविधेषु स्थलेष्वेवं दूषयन् वैष्णवानयम् ।
अदूषयच्छङ्करार्यानपीत्येतच्च वक्ष्यते ॥

हन्त ! लक्ष्मणार्यनिन्दनैकदत्तदृष्टयो
निजं गुरुं च शङ्करार्यमप्यदूषयन्नहो !
किन्तु तीव्ररोषदूषितान्तरङ्गशालिनां
निजेतरप्रभेद एव नास्ति मौर्ख्यशालिनाम् !
श्रीकण्ठभाष्यं परमं नवीनं व्याकुर्वता चाप्पयदीक्षितेन ।
प्रदर्शितो नैव च भाष्यभावस्तत्राविष्कृतं वैष्णववैरमेव ॥

ततश्च 'पूर्वाचार्यैः कलुषितं' इत्यत्र यदि श्रीभाष्यमपि विवक्षितं तर्हि श्रीभाष्यानुकर्तृत्वमेव श्रीकण्ठस्य प्रतिष्ठितं भवेत् । यदि च श्रीभाष्यादर्शभूतमेव अन्यत् भाष्यं तत्र विवक्षितमिति कुसृतिः, तदाऽपि रामानुजार्याणां श्रीकण्ठानुकारित्वं दीक्षितेनैव प्रतिक्षिप्तं भवेत् । एवञ्चोभयथा भवदधःपतनमेव । न तावन्मात्रं, रामानुजभाष्यस्य मूलभूतं तत् भाष्यमेव श्रीकण्ठेनानुकृतमित्यपि सिद्ध्येदेव ॥ ततश्च—

स्वाचार्यभाष्यानुकृतिर्हि लोके रामानुजार्यस्य भवेत् गुणाय ।
कथं भवेदन्यमतीयभाष्यानुकार एवं भवतो गुणाय ?

सूर्यनारायणशास्त्री तु 'उभावप्येतौ भाष्यकारौ बोधायनवृत्तिमवलम्ब्य भाष्यं व्यरचयताम् । उभयोर्मूलग्रन्थस्य साम्यात् भाष्यसाम्यमप्यवर्जनीयमापतितम्' इत्यभिप्रेयाय * ॥

एवं वदन् शास्त्रिवरोऽयमेनं निराकरोदप्पयदीक्षितेन्द्रम् ।
य प्राह धाष्ट्यादिह शैवभाष्यानुकारिणं लक्ष्मणसंयमीन्द्रम् ॥
अप्पय्यादप्ययं शास्त्री प्रामाणिकतरो भवेत् ।
न ह्युद्यताऽस्य रसना लक्ष्मणार्यस्य निन्दने ॥

आहत्य तु 'पूर्वाचार्यैः कलुषितं' इत्युक्तिः अस्य भाष्यस्य सर्वथा नवीनतामावेदयन्त्येव ॥

[ब्रह्मसूत्रप्रस्थाने शैवकलहः अत्यर्वाचीनकाल एव]

(४) प्रतिदर्शनं सिद्धान्तभागः, संप्रदायभागश्चेति स्थूलतया भागद्वयं वर्तते । तत्र आद्यो भागः सिद्धान्ततत्त्वनिरूपणपरः, द्वितीयश्च तत्तत्सिद्धान्तसिद्धपुरुषार्थसाधनमार्गप्रदर्शनपरः ॥ तत्र रामानुजदर्शने

* शिवाद्वैतग्रन्थस्य ६४पुटे द्रष्टव्यम्

विशिष्टाद्वैतमेव तत्त्वं, संप्रदायश्च वैष्णवः। एवं श्रीकण्ठमतेऽपि विशिष्टाद्वैतमेव तत्त्वं, संप्रदायस्तु शैवः॥

अत्र चायं विशेषः अवधेय — व्यासमहर्षिप्रणीतानि नयसूत्राणि सिद्धान्ततत्त्वनिर्धारणपराणि। अतः ब्रह्मसूत्रभाष्यकारैः स्वीयभाष्येषु तत्त्वं कीदृशम्? किं भेदः? उताभेदः? उत भेदाभेदौ? अथवा विशिष्टाभेदः? इत्येवंरीत्यैव चिन्त्यते, न त्वन्यदप्रकृतो देवताविशेषादिः। अत एव रामानुजाचार्यैः श्रीभाष्यदीपसारेषु विशिष्टाद्वैतमेव तत्त्वमित्येतावन्मात्रमेव मण्डितं, न तु तच्च तत्त्वं किं विष्णुः? उत शिवः? इत्यादिकम्॥

मध्वभाष्ये तत्र तत्र 'विष्णुर्वा रुद्रो वा' इति विकल्प्य 'विष्णुरेव' इति स्थापनेऽपि शिवपारम्यनिराकरणपूर्वकं विष्णुपारम्यं सूत्रारूढं नाकारि। 'ब्रह्म वा जीवो वा' इति विकल्पपर्यायतया केवलं 'विष्णुर्वा रुद्रो वा' इति विकल्पः प्रदर्श्यते। एवमेव वैष्णवाग्रेसरा अपि वल्लभाचार्यप्रभृतयः स्वीयब्रह्मसूत्रभाष्येषु नैवं शैववैष्णवकलहमातेनिरे। श्रीकण्ठभाष्ये तु विष्णुपारम्यनिराकरणपूर्वकं शिवपारम्यव्यवस्थापनं सूत्रारूढमेव अनुपपत्त्याद्यधिकरणेषु × बहुत्र सकोलाहलं क्रियते॥

एतत्सर्वं परिशीलयन्तो विमर्शकविचक्षणाः ब्रह्मसूत्रप्रस्थाने शैववैष्णवकलहमत्यर्वाचीनमेव मन्वते। वेदार्थसंग्रहे विष्णुपारम्यं व्यवस्थापयतां रामानुजाचार्याणां सूत्रभाष्ये परं—स्वाशयविरुद्धे श्रीकण्ठभाष्ये जाग्रत्यपि—अनुपपत्त्याद्यधिकरणेषु तूर्ष्णीभावः सर्वथाऽनुचित एव स्यात्। अतश्च शैववैष्णवकलहं ब्रह्मसूत्राणां शिरस्यारोपयदिदं श्रीकण्ठभाष्यमत्यन्तमर्वाचीनमेव॥

[सर्वदर्शनसंग्रहे श्रीकण्ठमतं न समग्राहि]

(५) क्रैस्तपञ्चदशशतकीयेन माधवाचार्येण स्वीयसर्वदर्शनसंग्रहे एतद्दर्शनगन्धस्यैवाभावात् ततोऽर्वाचीनमेवेदं श्रीकण्ठभाष्यमिति चिन्तामणिमहाशयप्रभृतयः विमर्शकविचक्षणा अभिप्रयन्ति * ॥

---

× १२३ (१-३-४), नथान्यप्रतिषेधात्—३ २-३५ इत्यादिषु।

* जर्नल आफ् ओरियण्टल्रिसर्च्—सपुट—१—पु-६७

शैवाद्वैतिनस्तु तदेतन्न सहन्ते । सर्वदर्शनसंग्रहे भास्करभाष्यस्याप्यनुल्लेखनात् भास्करभाष्यमपि तर्हि प्राचीनं न स्यात् । अतस्तत्रानुल्लेखनमात्रं नास्यार्वाचीनत्वं साधयितुमलमिति—

गते भीष्मे द्रोणे मृतवति च कर्णेऽपि निहते
जयाशां वीरो नोऽजहदिह हि दुर्योधननृपः ।
ततोऽपि त्वं शोच्यो भवसि , गतसत्त्वं शवनिभं
दुराशा नैव त्वां जहति खलु दुर्वासनवशात् ॥

अत्रेदमवधातव्यमायुष्मद्भिः—माधवाचार्यः स्वीयशङ्करविजयस्य पञ्चदशसर्गे भेदाभेदवादिनं कञ्चित् भट्टभास्करनाम्ना निर्दिशन्नपि न तं ब्रह्मसूत्रभाष्यकारं निर्दिशति । तत् कस्य हेतोः ? माधवोऽयं भेदाभेदवादिनं तं जानन्नपि तदीयं भाष्यं नावलोकितवान् स्यात् । कति वा ग्रन्था एवं कदाचिदुत्सन्ना अपि कालान्तरे प्रचारं लभन्ते । अतः माधवेन भास्करभाष्यं सर्वदर्शनसंग्रहग्रन्थे नोदटङ्कि । सर्वथा तु मौनमेवाङ्ग्यकारि ॥

नेयं गमनिका श्रीकण्ठभाष्यविषये दृश्यते । सर्वदर्शनसंग्रहे च शैवदर्शनानि सङ्गृहीतानि । पाशुपतदर्शने च हरदत्तं संवादयत्ययं माधवः । नीलकण्ठं हि शिवतत्परसूत्रभाष्यकारं निर्दिशत्ययमिति भवद्वाक्यम् । हरदत्तं हि नीलकण्ठशिष्यमाह सः । एवञ्च हरदत्तं निर्दिशन्नयं कुतो वा तद्गुरुं नीलकण्ठं भाष्यकारमपि न निरदिशत् ॥

ननु श्रीकण्ठ खलु हरदत्तानुयायीति दीक्षितः । एवञ्च गुरोः हरदत्तस्य ग्रहणेनैव तदीयानामपि ग्रहणं गतार्थमेवेति चेत्—हन्त कं वा वञ्चयसि मेधाविन् ! नीलकण्ठभाष्यस्य प्राचीनतायां यत् प्रमाणमुक्तं त्वया तदिदं शङ्करविजयकाव्यं हरदत्तं नीलकण्ठशिष्यमेव प्रकटयतीत्यसकृदुक्तम् । ततश्च गुरुं भाष्यकारं परित्यज्य शिष्यं हरदत्तं कथं वा समवादयत् माधवः ॥

अपि च भवद्दीक्षितोक्त्या हरदत्तस्य गुरुत्वेऽपि श्रीकण्ठस्यैव भाष्यकारत्वेन स एवाभ्यर्हिततरः संवादादौ । इदं च दर्शनचरितपरिशीलनरसिकानां सुविदितमेव । अतः श्रीकण्ठभाष्यं यदि माधवकाले आसीत् तर्हि हरदत्तं निर्दिशतस्तस्य तदनिर्देशः सर्वथा न घटत एव ॥

अन्यच्च—हरदत्त गुरुर्वा भवतु शिष्यो वा । परन्तु उभयोरेकाभिप्रायवत्त्वमवर्जनीयम् । एतावुभावपि विशिष्टाद्वयवादिनाविति दीक्षितः

घुष्यति । पाशुपतदर्शने हरदत्तं संवादयन्नयं तं पाशुपतमतनिष्ठमेवाभिप्रेयाय, न तु विशिष्टाद्वैतिनमित्यप्यवधेयम् ॥

ततश्च यदि नाम माधवाचार्यकाले इदं भाष्यं स्यात् तर्हि शैवमतं संगृह्णन् हरदत्तं च संवादयन् अयं श्रीकण्ठभाष्यमुदाहरेदेव । नेयं गमनिका भास्करभाष्यविषये दृश्यते । अत इदं भाष्यं सायणमाधवकाले नासीदेवेति सिद्धं रामानुजभाष्यादर्वाचीनत्वं कैमुतिकन्यायेन ॥

ननु माधवाचार्यात् प्राचीनेन क्रैस्त 1313 कालिकेन उमापतिशिवाचार्येण प्रणीते पौष्करभाष्ये इदं श्रीकण्ठभाष्यमुल्लिखितमेवेति चेत्—विचारयामश्चैतत्सर्वमुत्तरत्र श्रीकण्ठभाष्यवास्तविककालनिर्णयावसरे । पौष्करभाष्यं तु माधवाचार्यादर्वाचीनमेवेत्येतावदपरमद्यावगच्छ बृहस्पते !

[विशिष्टाद्वैतं वैष्णवानामेव कुलधनम्]

(६) स्वसंप्रदायप्रदर्शकमूलपुरुषाभावात् रामानुजाचार्यानुकरणं श्रीकण्ठस्य दुरतिलङ्घ्यमिति पूर्वं(29पुटे) उक्तम् । वस्तुतस्तु श्रीकण्ठभाष्यसमर्थितं विशिष्टाद्वैततत्त्वं वैष्णवानामेव कुलधनं श्रीकण्ठेनैव परिमुषितम्

क्रैस्तत्रयोदशशतकीयेन उमापतिशिवाचार्येण प्रणीते सङ्कल्पनिराकरणाख्ये द्राविडग्रन्थे बहवः शैवमतप्रभेदाः सङ्कीर्तिताः, तेषु विशिष्टाद्वैतपरं शैवं तु नोल्लिखितम् । शैवे प्रमाणतमत्वेनाभ्युपगते शिवज्ञानबोधभाष्यादौ द्राविडभाष्यग्रन्थेऽप्येवमेव बहूनां शैवमतानामुल्लेखेऽपि विशिष्टैक्यपरं शैवं सर्वथा नोल्लिखितम् । शिवाग्रयोगिशिवाचार्योऽपि शिवज्ञानबोधभाष्यशैवपरिभाषादिषु संस्कृतग्रन्थेषु नानाविधशैवान् कीर्तयन्नपि विशिष्टैक्यपरं शैवं सर्वथा नाकीर्तयत् । एतेन श्रीकण्ठप्रदर्शितं विशिष्टैक्यपरं शैवमतं तद्गोष्ठीसंप्रतिपन्नं पूर्वं सर्वथा नासीदिति करबदरायितम् ॥

सूर्यनारायणशास्त्र्यपि जीवाणुत्वविभुत्वाभ्यां, मुक्तौ जीवब्रह्मात्यन्तभेदाभेदाभ्यां, आणवमलानङ्गीकाराङ्गीकाराभ्यां च प्रसिद्धशिवाद्वैतात् विलक्षणमिदं श्रीकण्ठभाष्योक्तं शैवमतमिति न्यरूपयत *। तत्सर्वं ग्रन्थविस्तरभिया नात्र प्रतन्यते । परन्तु श्रीमद्रामानुजाचार्येभ्यः प्राचीनैः श्रीमद्यामुनमुनिप्रभृतिभिर्वैष्णवतल्लजैः सुसंरक्षितमिदं विशिष्टाद्वैततत्त्वम् । श्रीकण्ठभाष्यातिरिक्तस्तु नैकोऽपि ग्रन्थः ग्रन्थकारो वा विशिष्टाद्वैत-

* शिवाद्वैतग्रन्थस्य २२पुटादारभ्य द्रष्टव्यम्

स्थापकः शैवमतीयः प्रदर्शयितुं शक्यः सुरगुरुणापि। सति चैवं वस्तुतत्त्वे श्रीमद्रामानुजाचार्यान् श्रीकण्ठभाष्यानुकारिणो वक्तुं कथं न सङ्कुचन्ति शैवाद्वैतिनां रसना ! हन्त !!

पश्यन्तु सर्वेऽपि कलेः प्रभावं यदन्यदीयं परिमुष्य वित्तम्।
चोरोऽयमाक्रोशति सप्रलापं साधुं तु तत्स्वामिनमेव चोरम्॥

[शैवमतस्य ब्रह्मसूत्राणां च सम्बन्धः अर्वाचीनकल्पितः]

(७) किं बहुना! वास्तविकस्य शैवमतस्य ब्रह्मसूत्राणां च न सम्बन्धाभावमात्रं, प्रत्युत बध्यघातुकभावोऽपि। तथा हि—सन्ति संप्रतिपन्नानि वैष्णवदर्शनानि रामानुजमध्ववल्लभनिम्बार्कप्रभृतीनि अनेकानि। एवमेव सन्ति बहूनि शैवदर्शनानि। तत्र सर्वदर्शनसंग्रहे पाशुपतशैवप्रत्यभिज्ञारसेश्वरदर्शनानि क्रोडीकृतानि। श्रीभाष्ये–कालमुखा कापालिकाः शैवाः पाशुपताश्चेति चत्वार्युल्लिखितानि। आगमप्रामाण्ये तु शैवं पाशुपतं सौम्यं लागुडं च इति उट्टङ्कितानि। भामत्यां तु वाचस्पतिमिश्रैः शैवा पाशुपता कारुणिकसिद्धान्तिन कापालिकाश्चेति उत्कीर्तितानि। एवमन्यान्यपि तत्र तत्रोक्तानि॥

एवं बहुधा विलसन्तु शैववैष्णवदर्शनेषु अयमेको विशेषः अवगन्तव्य विमर्शकविचक्षणैः। सर्वाण्यपीमानि वैष्णवदर्शनानि ब्रह्मसूत्राण्येवावलम्ब्य प्रावर्तन्त। वरीवृत्यन्ते च तत्तन्मतानुगुणं वैष्णवाचार्यविरचितानि ब्रह्मसूत्रभाष्याणि। परन्तु उक्तेषु शैवदर्शनेषु एकमपि शैवं दर्शनं न ब्रह्मसूत्रमवलम्ब्य प्रवृत्तं दृश्यते। हरदत्ताचार्योऽपि ब्रह्मसूत्रविषय उदास्त एवेति पूर्वमेव (३०पुट) कथितम्॥

एतत्सर्वपरिशीलने–ब्रह्मसूत्राणां शैवदर्शनस्य च सम्बन्धः पूर्वं कदापि नासीत्। वैष्णवदर्शनस्य तेषां च सम्बन्ध आविसीतः बहोः कालादारभ्यैव वरीवृत्यत इति सम्यगवगम्येत। श्रीमद्रामानुजार्यप्रभृतीनां श्रीमद्यामुनमुनीनां च कालादपि पूर्वं श्रीवत्साङ्कमिश्रादिभिः वैष्णवाचार्यैः प्रणीतं ब्रह्मसूत्रभाष्यमासीदिति इदं द्रढयत्येवोक्तमर्थम्॥

किञ्च ब्रह्मसूत्रेषु द्वितीयाध्यायद्वितीयपादगतानि–'पत्युरसामञ्जस्यात्, अधिष्ठानानुपपत्तेश्च, करणवच्चेन्न भोगादिभ्यः, अन्तवत्त्वमसर्वज्ञता वा' इतीमानि सूत्राणि पाशुपतमतनिराकरणपराणि इति सर्वसंप्रतिपन्नम्।

शाङ्करभाष्ये निमित्तकारणतावादिसामान्यनिरसनपरतया एतदधिकरणव्याख्यानेऽपि पतिशब्दाधिष्ठानशब्दाभ्यां भामतीब्रह्मानन्दाद्युक्तिभिश्च इदं अधिकरणं पाशुपतमतमेव प्राधान्येन कटाक्षयतीति निश्चप्रचम् ॥

युक्तं चैतत्-विशुद्धा शैवी संस्कृतिः वैदिकसंस्कृतेः साक्षात् प्रतिस्पर्धिभूतेत्येव विमर्शकानां निष्कर्षः । ईश्वरनिश्वसितरूपवेदापेक्षया ईश्वरोपदिष्टा आगमा एवोपादेयतमाः, तेन च वेदोक्ता वर्णाश्रमधर्मव्यवस्था, उपनिषत्प्रतिपन्नं ब्रह्मण उपादानत्वादिकं च आगमविरुद्धत्वादनुपादेयमेव—इति खलु शैवमतरहस्यम् ॥ भवद्दीक्षितोऽपि हि पाशुपताधिकरणे 'शिवस्य निमित्तत्वमात्रं अनादिपरंपरासिद्धम्' इति स्पष्टमेवाह । एवञ्च शिवस्योपादानत्वसमर्थनं श्रीकण्ठभाष्यादारभ्यैवेति च स्पष्टम् । शैवानां मूलप्रमाणभूतः शिवज्ञानबोधोऽपि 'स्त्रीपुंनपुंसकादित्वात् जगतः कार्यदर्शनात् । अस्ति कर्ता सहृत्वैतत् सृजत्यस्मात् प्रभुर्हरः' इति आनुमानिकं ईश्वरं वदन् एतन्मतमेव पाशुपताधिकरणप्रतिक्षेप्यं द्रढयति ॥

ननु शिवज्ञानबोधः क्रैस्त 1192-1212 कालिकेन मेय्कण्डार् नाम्ना कृतः *। स कथं ब्रह्मसूत्रप्रतिक्षेप्यः स्यादिति चेत्-हन्त ! शैवसंप्रदायज्ञानविधुरस्येदं चोद्यम् । शिवज्ञानबोधः खलु न स्वतन्त्रग्रन्थः, किन्तु रौरवाद्यागमेभ्यः सङ्गृहीत इति सकलशैवसंप्रतिपन्नं त्वं न जानासि चेत् नायं ममापराधः । एवञ्च ब्रह्मसूत्रं रौरवाद्यागममेव कटाक्षयति । प्राचीनश्च शैवमार्गः ब्रह्मणो निमित्तकारणतामात्रवादीति दीक्षितेनैवोक्तम् । तथा च पाशुपताधिकरणं संप्रतिपन्नं शैवमतं प्रतिक्षेप्तुमेवोत्थितमिति हस्तामलकायितम् ॥

ततश्च ब्रह्मसूत्राणां शैवमतस्य चाहिनकुलवद्वध्यघातुकभावे सिद्धे श्रीकण्ठभाष्यमिदं नूत्नतया बान्धव्यमुपलालयितुं प्रवृत्तमिति आतपगतगजायितम् ॥

त्वं तु यौतमभिवाञ्छसि ह्यहेः तद्विनाशिनकुलेन सादरम् ।
नानुरूप्यमनयोस्तु सर्वथा मा यतस्व च विवाह ईदृशे ॥

---

* शिवज्ञानबोधभूमिकादिषु नल्लस्वामिपिल्लैमहाशयेनैवमुक्तम् ॥

ननु शैवागमा द्विविधाः वेदानुरोधिनः वेदविरोधिनश्चेति । तत्र निमित्तोपादानभेदवादः वेदविरोधिशैवागमवर्णितः । वेदानुरोधिशैवागमेषु तु निमित्तोपादानाभेद एव वर्ण्यते । दीक्षित एव तमिमं विषयविभागं प्रदर्शयति किञ्चिदप्यनवलोकयन् स्वैरं जोघुष्यसे त्वम्—

अयि साधो ! निमित्तोपादानाभेदवादिशैवमतं भवदुक्तं केन कुत्र वा पूर्वतनेन वर्णितमिति वक्तव्यमायुष्मता । भवद्दीक्षित एव हि पाशुपताधिकरणे निमित्तोपादानभेदवाद एव अनादिव्याख्यानपरंपराप्राप्त इति अलिखत् । एवमनादिव्याख्याविरुद्धतया निमित्तोपादानाभेदपरतयाऽर्थवर्णनं नूतनतया कुतः प्रवृत्तम् ? को वात्र भवतो मार्गदर्शकः ? हरदत्तोऽपि निमित्तोपादानभेदवादीति पूर्वमेव विशदीकृतम् । संप्रतिपन्नशैवमतेषु कुत्रापि निमित्तोपादानाभेदः न सम्मतः । शिवज्ञानबोधादिपठितॄणामिदं स्पष्टं भायात् । एतच्च अनादिसंप्रदायविरुद्धतया निमित्तोपादानाभेदवादपरभाष्यकल्पनमिव तदनुगुणागमविभागादिकल्पनमप्यर्वाचीनानामाग्रहिणामेव केषाञ्चिदिति हस्तामलकायितम् ॥

ननु शिवशक्त्यंशभूतनारायणस्योपादानत्वं, शिवस्य निमित्तत्वमित्ययमंशः सर्वशैवसम्मतः। शक्तेः शिवस्य चाविनाभाव एव सम्बन्धः। एवञ्च शक्तेरुपादानत्वे सिद्धे तदविनाभूतस्य शिवस्याप्युपादानत्वं सिद्धमेव । हरदत्तादीनां निमित्तोपादानभेदवादश्च तयोः शक्तिशिवयोर्वास्तविकभेदसत्त्वादुपपद्यते । अतश्च श्रीकण्ठोक्तः पक्ष नापूर्वः ? उपपादनक्रमस्तु अपूर्वः स्यात् काममिति चेत्—

हन्त दार्शनिकदृष्टिवञ्चितो यच्च किञ्चिदपि कत्थते भवान् ।
नैव वेद्मि भवत प्रबोधने मार्गमत्र तु, तथाऽपि बोधये ॥

शैवमतानां बहुविधत्वेऽपि दार्शनिकदृशा द्वैविध्य एवान्ततः सर्वेषां पर्यवसनम् । तत्र पतिपशुपाशभेदेन पदार्थत्रैराश्यमसङ्कीर्णमभ्युपगम्य प्रवृत्ता एका शाखा–अस्या एव पाशुपतमतत्वेन प्रसिद्धिः । शक्तिविशिष्टः शिव एक एव तत्त्वं, शक्तिरेव साक्षात् विचित्रचेतनाचेतनात्मकजगदाकारेण परिणमते इति द्वितीया शाखा । अस्या सामान्यतः शैवमतत्वेन प्रसिद्धिः । श्रीकण्ठभाष्यं तु मुक्तावपि भेदं प्रतिपादयत् पदार्थत्रैराश्याङ्गीकारेणाद्यमेव पक्षमवलम्ब्य प्रवृत्तमिति स्पष्टम् । तत्पक्षे

च स्वतन्त्रं द्रव्यान्तरमेव जगदुपादानम् । कुत्रचित् तस्यापि शक्तिशब्देन व्यवहारः । कार्योपयोग्यपृथग्विशेषणं हि शक्तिः । 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा' इत्यादिविष्णुपुराणेऽपि चेतनाचेतनयोः ब्रह्मविशेषणभूतयोः शक्तित्वमुच्यते । तावन्मात्रेण नारायणस्योपादानत्वमित्यादिकं दुरुपपादमेव । नारायणश्च इतरजीववत् जीवकोट्यन्तर्भूत एव खलु वाच्यः । तस्य च जगदुपादानत्वाद्यभिधानं इतरजीववदेव न घटते । अधिकमन्यत्रद्रष्टव्यम् ॥

वैदिकस्य वैष्णवमतस्य प्रभावमुदास्तुमसमर्थैः शैवैः नारायणमपलपितुमशक्तैः तं शिवशक्तित्वेनाभ्युपगम्य कथञ्चिन्निर्वृतिमीप्सुभिः तदनुगुणपुराणादिकं कल्पयद्भिः वृथा कोलाहलः क्रियते— स्वीयं शाठ्यं केनापि नावगम्येतेति । परन्तु शक्तेः शिवाविनाभूतत्वेऽपि तयोर्वस्तुतो भेदात् निमित्तोपादानाभेदः दुर्वच एव ॥

ननु भवन्मतेऽपि ब्रह्मविशेषणभूतस्याचित एव साक्षादुपादानत्वमिति कथं निमित्तोपादानाभेदवचनं ? इति चेत् ? न वयमत्रास्मत्सिद्धान्तनिरूपणाय प्रवृत्ता इत्यसकृदुक्तमपि विस्मृत्य किमेवं पृच्छसि प्राज्ञमानिन् !

ननु स्मराम एव तत् । परन्तु भवन्मते यया प्रक्रियया निमित्तोपादानाभेदः साध्यते, सा प्रक्रिया किमस्माकं परं काकभक्षितेति पृच्छामो भवन्तमिति चेत्—

युष्माकं यादृशं गोत्रं तादृशं गोत्रमेव मे ।
इति यौनं चिकीर्षुस्तु ब्रूतेऽयं वृषलद्विज ॥

शब्दः परं चोरयितुं हि शक्यः श्रीभाष्यपाङ्क्तीयदचोरयस्त्वम् ।
अर्थं परं वक्तुमहं तवाद्य साहाय्यकृन्स्यामिति हन्त कष्टम् !

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते तत्त्वं नव्यरङ्गेन्द्रयोगिनः ॥

परन्त्वेवमस्मान् शरणीकुर्वता भवता भवन्मतस्यास्मद्भाष्योपज्ञत्वमवशतः स्वीकृतमिति हन्त कृपार्हस्त्वम् । ततश्च शैवमतेषु निमित्तोपादानाभेदवादः सर्वथा न प्राचीनः, किन्तु अस्मन्मतानुकरणफलमेव तदिति अप्रकम्प्यम् । उक्तमत्र श्रीकण्ठभाष्यकालनिर्णयप्रकरणे शिष्टं स्पष्टम् । ततश्च शैवमतब्रह्मसूत्रयोर्वध्यघातुकभाव एव ॥

ननु किमेवं शालिशभावात् कोलाहलमातनोषि ? यूयमपि अस्मत्कनिष्ठा एव । अनन्तरस्मिन् हि उत्पत्त्यसंभवाधिकरणे वैष्णवानामपि मतं प्रतिक्षिप्तमेव सूत्रकारेण । भवन्तोऽपि हि आगमप्रामाण्यवादिनः । ततश्चावयोस्सुखदुःखसाम्ये किमिदं वृथा मां पृथक्कृत्य निन्दसि ?

कृतज्ञोऽस्म्यनुकम्पाशालिनि त्वयि महात्मन ! परन्तु उत्पत्त्यसंभवाधिकरणं पाञ्चरात्रप्रामाण्यनिरसनपरमिति केनोक्तमिति प्रथमं वक्तव्यम् । न हि श्रीभाष्यादिषु तथोक्तम् । शङ्कराचार्यैस्तथा वर्णनेऽपि पाशुपताधिकरणापेक्षया पाञ्चरात्राधिकरणे विच्छित्तिविशेषः प्रदर्शित एव तैः ॥ तथा हि भाष्यं—'येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतः तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते । ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः प्रकृतिश्चाधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः । तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति—उच्यते—यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवति । अस्ति त्वंशान्तरं विसंवादस्थानं तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवः निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम् । स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण, सङ्कर्षणव्यूहरूपेण, प्रद्युम्नव्यूहरूपेण, अनिरुद्धव्यूहरूपेण च । तमित्थं भूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति । तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रियते 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते, तदपि न प्रतिषिध्यते, श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्' इति ॥ नैतादृशो वाक्यविन्यासः पूर्वस्मिन् पाशुपताधिकरणे दृश्यते । तेन च शङ्कराचार्याणां पाञ्चरात्रागमे आदरविशेषः प्रकटीकृतः । जीवोत्पत्तिप्रतिपादकांशे परं विप्रतिपत्तिः प्रादर्शि । पाञ्चरात्रस्योपादेयत्वे सिद्धे जीवोत्पत्तिप्रतिपादकवाक्यान्यप्यन्यपराणि कुतो न स्युः, 'प्रजापतिः प्रजा असृजत' इत्यादिवेदवाक्यवत्—इति विशिष्टाद्वैतिनामाशयः । कल्पतरुकारोऽपि—

'बुद्धिपूर्वकृतिः पञ्चरात्रं निश्वसितं श्रुतिः ।
तेन जीवजनिस्तत्र सिद्धा गौणी नियम्यते ॥'

इत्यस्मदाशयमेवालञ्चकार । तथा च शङ्कराचार्यास्तदनुयायिनः प्रामाणिकाश्च भवत्प्रतिकूला एवेत्यवगच्छ ॥

ननु भवदीयं श्रीवत्साङ्कमिश्रविरचितं भाष्यं इदमधिकरणं पाञ्चरात्रप्रामाण्यनिराकरणपरमेवाभिप्रैतीति भवदीयागमप्रामाण्यग्रन्थादेवावगम्यते । नतश्च यूयमपि ब्रह्मसूत्रबहिष्कृता एवेति चेत्—किमेवं संरंभः उत्तरवाक्यमनवलोकयतस्तव ? तत्रैव खलु यामुनार्यैः प्रदर्शितं समाधानमप्यवधारय त्यक्त्वा संरम्भम् ॥

उक्तं हयशिरोरत्नभूषणादिषु विस्तरात् ।
पञ्चरात्रस्य मानत्वमाचार्यैः *, अवलोक्यताम् ॥

अपि च 'नन्वत्र भवतां भाष्यकाराणां' इति खल्वागमप्रामाण्यग्रन्थे आक्षेपोपक्रमः । एवञ्च तद्भाष्यकाराणां वैष्णवत्वं स्पष्टम् । ततश्च वैष्णवानां ब्रह्मसूत्रसम्बन्धोऽविगीत इति सिद्धम् । किमतिरिक्तचर्चया ?

किञ्च किमेवं मदुपालंभेनैव स्वपक्षं साधितं मन्यसे त्वम् ? न तथा मन्यामहे । वयमिव यूयमपि ब्रह्मसूत्रबहिष्कृता इत्यावेदयाम इति चेत् । आ पुरोभागिन् ! स्वस्य नेत्रद्वयार्पणेनापि परस्य एकमेव वा नेत्रमपजिहीर्षसि त्वम् ! परन्तु—

एवं प्रवृत्तस्य तवेव नूनं नेत्रे पतेतां न तु मामकं तत् ।
यतो वयं संश्रितरक्षणव्रतं सदा हृषीकेशमिह प्रपन्नाः ॥

वैष्णवाचार्यैः सर्वैरपि ब्रह्मसूत्राणि व्याख्यातानि । श्रीभाष्यात्पूर्वमेव वैष्णवाचार्यप्रणीतं ब्रह्मसूत्रभाष्यमासीदित्यसकृदुक्तम् । एवं शैवाचार्येण प्रणीतं ब्रह्मसूत्रभाष्यं संप्रातिपन्नं प्राचीनमेकं वा भाष्यं प्रदर्शय त्वं महामते !

ननु ! श्रीपतिपण्डितप्रणीतं वीरशैवमतानुयायि भाष्यं न दृष्टचरं किं भवता ? एवं क्रियासारनामकं श्लोकात्मकं नीलकण्ठशिवाचार्यविरचितं ब्रह्मसूत्रविवरणं किं नावलोकितं धीमता ? श्रीकरभाष्यं च कैस्त-

* श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैः ।

द्वादशशतक एव विरचितमिति काशीनाथशास्त्री स्वीयकर्णाटकभाषात्मकग्रन्थे सप्रमाणं प्रसाधितवान् । एवं क्रियासारोऽपि क्रैस्त १३ शतकीयेन ज्योतिर्नाथेन शैवरत्नाकरे उल्लेखात् ततोऽपि प्राचीन इति वीरशैवाः संगिरन्ते । क्रियासारकारश्च स्वपूर्वतननीलकण्ठभाष्यानुरोधेनैव तं ग्रन्थं ग्रथयामासेति तदुपक्रमे व्यक्तम् । ततश्च सिद्ध एव ब्रह्मसूत्रसंबन्धः शैवानामपीति चेत्—

अह ह युक्तमिदं तव भाषणं गतभयस्य च शैवसुहृन्मणेः।
परमिदं त्विह सत्यमुदीर्यते भज च शैवमतं त्यज शाङ्करम् ॥

श्रीकरभाष्यं क्रियासारश्च वर्णाश्रमधर्म-यागीयपशुहिंसाद्यभ्युपगमात् वीरशैवमतस्यात्यन्तं विरुद्धौ सर्वथा वीरशैवानामनुपादेयाविति वीरशैवैरेव प्रामाणिकै दूरतो निरस्तौ ॥

श्रीकरभाष्यं हि शाङ्कररामानुजश्रीकण्ठभाष्याणां संकरस्वरूपमिति तद्विषयिणी चर्चैव प्रामाणिकानां विदुषां विलक्षां विस्मयं विषादं चावहेत् *। किं बहुना ! वीरशैवविबुधवर्येण प्राड्विवाकेन सदाशिवय्यनाम्ना नेल्लूर् नगरे 18-19,4,59दिने मिलितायां वीरशैवसभायामेवाध्यक्षभाषणावसरे—' गतशतकान्तिमभागस्थेन सेकन्दराबाद्वासिना आराध्यपण्डितेन सृष्टं श्रीकरभाष्यं वीरशैवानां सर्वथा न प्रमाणम् ' इति उद्घोषि ॥ (मैसूरुप्राच्यकोशागारीयः के ६८७१ ग्रन्थो द्रष्टव्य.)

तत्त्वमेवमुरीकृतं महावीरशैवविबुधोत्तमैरपि ।
तानपि त्वमतिशेष इत्यहो ! कष्टमप्रतिविधेयता कलेः ॥

---

* श्रीकरभाष्ये २००-३२०पुटयोः श्रीकण्ठनामगृहीत दृश्यते । ७४-२४४पुटयोर्नीलकण्ठनामगृहीतमपि तदपि तत्रत्यविषयदृष्ट्या श्रीकण्ठभाष्यमेवाङ्गी कोडीकरोतीति द्रष्टव्यम् । परन्तु अन्तरधिकरण(१-१ २२)वाक्यानि श्रीकण्ठभाष्यगतानि तथैवोद्धृत्य तस्य नीलकण्ठकृतछान्दोग्यभाष्यत्वेन प्रतारण कृतमित्येको विशेषः । श्रीकण्ठातिरिक्त. नीलकण्ठ. ब्रह्मसूत्रभाष्यकर्ता नासीदेव । महाचार्यप्रभृतयः उमापतिशिवाचार्यप्रभृतयश्च श्रीकण्ठमेव नीलकण्ठनाम्ना व्यवहरन्ति । अत. नीलकण्ठ नामकः कश्चित् वीरशैवमतानुयायिभाष्यकर्ता आसीदिति सर्वथाऽप्यविश्वसनीयमेव ।

यद्यपि क्रैस्तद्वादशशतके श्रीपतिपण्डिताराध्यनामकः कश्चिद्वीरशैव-पण्डित आसीदित्यत्र शिलालेखादिकं प्रदर्शितं काशीनाथशास्त्रिणा, तथाऽपि तस्य भाष्यकारत्वे, परिदृश्यमानभाष्यस्य तदीयत्वे वा न कि- दपि प्रमाणमुपदर्शयितुं शक्यं वीरशैवमतस्थापनाचार्येण शैवाद्वैतिना भवताऽपि ॥ अत श्रीकरभाष्यमेतत् कस्यापि कस्मिन्नपि न प्रमाणी-कर्तुं शक्यम्। वीरशैवसमुदायाङ्गीकृतेऽस्मिन् नाधिकं वक्तव्यमस्माभिः ॥

तथैवायं क्रियासारोऽप्यर्वाचीनेन कल्पितः।
ज्येष्ठ श्रीकरभाष्यस्येत्यवधारय दुर्मते ॥

किञ्च क्रियासारोल्लिखितं नीलकण्ठभाष्यं यदि वास्तविकं स्यात् तदा तत् शङ्करभाष्यस्यापि प्राणप्रदं स्यादिति पूर्वमपि सप्रमाणं निरूपितम् ॥

ननु भोः! किमेवं पुनःपुनरुद्घुष्य सन्तुष्यसे त्वम्? क्रियासारो-ल्लिखितं नीलकण्ठभाष्यं सर्वथा काल्पनिकमेव। तथा हि—कमलाकर-भट्टविरचिते निर्णयसिन्धौ एकः क्रियासारग्रन्थ उल्लिखितः। शाक्ता-नन्दतरङ्गिण्यां च एकः क्रियासार उल्लिखितः। तत्राद्यः धर्मशास्त्रग्रन्थः, द्वितीयः तन्त्रशास्त्रग्रन्थः। परन्तु एतदुभयोः रघुनाथकृतभोजनकुतू-हले वोल्लिखिताः क्रियासारश्लोकाः नीलकण्ठशिवाचार्यविरचिते प्रकृते क्रियासारे नोपलभ्यन्त इत्यवधेयमिदम्। किं बहुना! शिवतत्त्वचिन्ता-मणिप्रभृतिषु वीरशैवग्रन्थेष्वप्युल्लिखिताः क्रियासारश्लोकाः प्रकृते क्रिया-सारे नोपलभ्यन्ते। अतश्चायं क्रियासारः प्राचीनसंप्रतिपन्नक्रियासारतो भिन्न एव। अत्र च 14 उपदेशे प्रतिपाद्यमाना शिवपूजापद्धतिश्च अप्पय-दीक्षितप्रणीतशिवार्चनाचन्द्रिकामक्षरशोऽनुकरोति। तेन चायं क्रिया-सारः अप्पयदीक्षितानन्तरकालिकः न संप्रतिपन्नो ग्रन्थः ॥

ननु अयमेव ग्रन्थः अप्पयदीक्षितेनानुसृतः कुतो न स्यादिति चेत्—न युज्यत इदं—शिवार्चनाचन्द्रिका हि शैवागमानुसारिणी प्रति-ष्ठितशिवलिङ्गपूजाप्रतिपादनपरा। वीरशैवमतं तु प्रतिष्ठितशिवपूजां निषेधति। अतः क्रियासारोक्तशिवपूजाविधिः न वीरशैवमतानुगुणा, तदनभिज्ञेनापूर्णपण्डितेन केनचित्परिमुष्यात्र संयोजिता। अत एव 24। पुटे 'गर्भगृहे स्थितं' इत्यादिस्थाने 'वक्षस्स्थलस्थितां सज्जिकामु-

द्धास्य' इति विपरिणामः तत्र कृतः । वीरशैवमते प्रतिष्ठितलिङ्ग-पूजानिषेधात् गर्भगृहाद्वैनप्रसक्तिमालोच्य पाठो विकारित' । अथाप्युत्तरत्र कथ्यमानद्वारपालादिपूजादि वीरशैवमते विरुद्धत्येव । एकपदं विपरिणमय्य कृतकृत्यं मन्यते क्रियासारकारः । अतः शिवार्चनाचन्द्रिकैव क्रियासारकर्त्राऽर्धपण्डितेनान्वकारीति कण्ठदघ्नायितम् । तदेवं परकीयग्रन्थचौर्यादनात्वं च सिद्धम् । तादृशक्रियासारे उल्लेखमात्रात् शङ्कराचार्याणां नीलकण्ठभाष्यानुकारित्वमपि वर्णयितुं न शक्यम् ॥

इतरमतीयानि ब्रह्मसूत्रभाष्याण्यवलोक्य स्वीयमते तदभावेन न्यूनतामभिमन्यमानस्य, माधवीयशङ्करविजये नीलकण्ठनाम च पश्यतः कस्यचित् वीरशैवस्य परप्रतारणमेवेदम् । एवमेव प्रकृतश्रीकण्ठभाष्यमेव आद्यन्तभागयोर्विपरिणामेन कतिपयश्लोकयोजनेन च नीलकण्ठभाष्यत्वेन वीरशैवैः बेंगलूरुनगरे कर्णाटकलिप्यां मुद्रितमप्युपलभ्यते । आगच्छता च कालेन वीरशैवमते गीताभाष्याभावन्यूनतामपि विचिन्त्य श्रीकण्ठनाम्नयेव एकं गीताभाष्यमपि श्रीकण्ठभाष्यविरुद्धप्रक्रियं विलिख्य आन्ध्रदेशे मुद्रितं परिदृश्यत इत्यपि अवधेयं विमर्शकैः । हन्त ! कियान् श्रमः ब्रह्मसूत्रादिबान्धव्यस्थापनाय शैवानाम् ॥

किञ्च क्रियासरे 201 पुटे उदाहृतमुपनिषद्भाष्यं कस्येति वक्तव्यम् । न हि नीलकण्ठेनोपनिषद्भाष्यमपि विरचितमिति यत्रकुत्रचित् येन केनाप्युक्तम् । उदाहृतमुपनिषद्भाष्यं च श्रीशङ्कराचार्याणामेव ॥

किञ्च 'क्रियासार' इति ग्रन्थनामदर्शने स ग्रन्थः सांप्रदायिकार्थनिरूपणपर एव स्यात्, न तु तत्र सैद्धान्तिकार्थनिरूपणप्रसक्तिः । न हि धर्मशास्त्रग्रन्थेषु द्वैताद्वैतविशिष्टाद्वैतवादानां प्रसक्तिरस्ति । अतः निर्णयसिन्ध्वादौ क्रियासारनामकग्रन्थोल्लेखं पश्यताऽर्धपण्डितेन शैवेन तन्नाम्ना ग्रन्थस्य रचने प्रवृत्तेनात्र क्रियासारे ब्रह्मसूत्रविचारः संयोजितः स्वयं किञ्चिद्भाष्यं प्रकल्प्य । अन्यथा हि क्रियासारकर्तृकाले उपलब्धं चेत् भाष्यं तस्येदानीमदर्शनं न घटेत । शङ्करभाष्यविलक्षणमेव च नीलकण्ठभाष्यं उदाह्रियेत । एतदुभयाभावात् नीलकण्ठभाष्यं केवलं कल्पितमेव । अत एव स्वपक्षविरुद्धमपि शङ्करभाष्यमेवोदाहरति सः । एवं च मा वद पुनःपुनः नीलकण्ठभाष्यमूलकं शङ्करभाष्यमिति ।

तदेवं स्वप्रातिकूल्यानुकूल्यज्ञानरहितेन तेन शङ्करभाष्यमेव चोरयित्वा लिखितमिति कथमयं क्रियासार प्रामाणिक स्यात्? कथं वा तदनुरोधेन श्रीशङ्कराचार्यान् नीलकण्ठभाष्यानुकारिणः पुनःपुनर्वदसि त्वं–इति चेत्—

एतदेव हि ममाप्यपेक्षितं वत्स! गच्छ गतकण्ठकेऽध्वनि।
व्याससूत्रगणशैवपक्षयोः लेशतोऽपि न हि सख्यसंभव॥

अत्रायमवधेयः विमर्शनकुतूहलिभि विमर्शकविचक्षणानां सुदृढो निर्णयः–प्रप्रथमं जनसमुदाये आर्याः, द्राविडाश्चेति विभागद्वयमासीत्। एनयोर्मध्ये आर्या द्राविडापेक्षया आत्मानं सुसंस्कृतंमन्या आसन्। तेषां संस्कृतिर्वैदिकी, वर्णाश्रमादिधर्मैः सुसंश्लिष्टा चासीत्। द्राविडास्तु वैदिकसंस्कृतिबाह्याः, वर्णाश्रमादिधर्मानभ्युपगन्तारश्चासन्। आर्याश्चात्मनः अत्यन्तसुसंस्कृतान् द्राविडांश्चात्यन्तमसंस्कृतांश्च मन्यमाना· द्राविडान् लिङ्गपूजकान् शिश्नोपासकांश्चावहेलयन्त आसन्निति ऋग्वेदादिवशादवगम्यते। तेन च द्राविडाः शिवपूजका आसन्निति सिद्धम्। आर्यास्तु विष्णुपूजकाः। विष्णोर्वेषभूषगुणादिवर्णनप्रक्रियां शिवस्य तद्वर्णनप्रक्रियां च परिशीलयतां विष्णोरार्यदेवत्वे शिवस्य द्राविडदेवत्वे च आर्यदृष्ट्या वा युक्तता स्वयं भायात्। अत एव व्यालयज्ञसूत्रधारित्वेनैव शिवस्य प्राचीनैर्वर्णनं क्रियते। एवं आर्याः द्राविडान् व्रात्यपदेन व्यवहरन्तः अवहेल[illegible]नश्च आसन्नित्यपि प्राचीनलेखादिवशादवगम्यते। व्रात्यपदं च संस्कारहीनपरम्। तेन च द्राविडाः षोडशसंस्काररहिताः इति सिद्धम्। एवं च पूर्वं भारतदेशे वैदिकमार्गानुयायिनः वर्णाश्रमधर्माभ्युपगन्तारः, विष्णुपूजकाः आर्याः—वेदबाह्या, वर्णाश्रमधर्मानभ्युपगन्तारः, शिवपूजकाः द्राविडाश्च प्रत्येकमसङ्कीर्णा एवासन्। द्राविडानां मूलप्रमाणभूतो ग्रन्थः शैवागम एव। एतेषां वेदबाह्यत्वात् आर्यमते वेदानामिव द्राविडानां शैवागमाः स्वतन्त्रप्रमाणभूता आसन्। विष्णुपूजकानामार्याणां तु वैदिकत्वात् वैष्णवागमाः वेदानुसारिणः वेदोपबृह्मणभूताः पर्यगणयन्त। आगच्छता च कालेन वैदिकसंस्कृतेः प्रभावात् द्राविडसंस्कृतावपि कतिपयविपरिणामः समजनि। एवं तत्सहवासवशात् आर्यसंस्कृतावपि किञ्चित्परिणाम समभूदिति प्रतीयते। इदं सर्वं ग्रन्थान्तरे सुविशदं सप्रमाणं च विचारयिष्यामः॥

अप्पयदीक्षितोऽपि हि पञ्चरात्राधिकरणशिवार्कमणिदीपिकायां अन्ते वैखानससूत्रस्य वैदिकत्वमभ्युपगच्छन् वैखानसागमस्यापि वैष्णवस्य वैदिकत्वमभ्युपागच्छदेव ॥

ननु ब्रह्मसूत्रकारेण पञ्चरात्रमात्रनिरासात् वैखानसानिरासाच्च तस्योपादेयत्वं घटेतापि. पञ्चरात्रं त्वप्रमाणमेवेति दीक्षिताशय इति चेत्—अस्तु महात्मन तथैव । सर्वथा तु वेदाविरोधी ब्रह्मसूत्रानिरस्यश्च वैष्णवागमः अङ्गीकृतो भवति । प्रदर्शयैवं भवच्छैवागमेषु ब्रह्मसूत्रानिरस्यं निमित्तोपादानाभेदवादित्वंप्रतिपन्नं प्राचीनं भवद्दीक्षितातिरिक्तशैवप्रदर्शितं शैवागमशाखान्तरम् । हरदत्तादयश्च शैवा निमित्तोपादानभेदवादिन पाशुपताधिकरणविषया एवेति पूर्वमेव (पु-४९-५०) निरूपितम् ॥

ननु तावताऽपि पञ्चरात्रं कथं संरक्ष्येत भवता ? इति चेत्—

पृच्छ त्वं शङ्कराचार्यं येनोक्ता गुरुणा तव ।
पञ्चरात्रोक्तपूजादिविधीनां श्रौतता दृढम् ॥
तद्विद्धि प्रणिपातार्यैर्यद्यस्ति तव कौतुकम् ।
उपदेक्ष्यन्ति तत्तत्त्वं नव्यरङ्गेन्द्रयोगिनः ॥

इदमेव खलु विवक्षितमात्रास्माकं—यत् शैवागमा वेदप्रतिकोटिभूताः, अत एव ब्रह्मसूत्रसम्बन्धरहिताश्च । वैष्णवागमास्तु वेदानुरोधिनः । अनादेरेव कालात् वैष्णवानां ब्रह्मसूत्राणां च संबन्धोऽस्ति । यत्र कुत्रचित्पाञ्चरात्रस्य स्वतःप्रामाण्यसमर्थनं च तत्प्रामाण्योपपादनौत्सुक्यादिति । एवं च शैवमतस्य ब्रह्मसूत्रस्य च सर्वथा सम्बन्धाभावात् शैवानां ब्रह्मसूत्रबान्धव्योपलालनमत्यर्वाचीनकाल एवेति वज्रलेपायितम् ॥

नन्वस्तु आर्यसंस्कृतेः प्रतीपगामिनी द्राविडसंस्कृतिरिति । अस्तु च तरां शैवसंस्कृतिः आगमैकमूला, शैवाश्च वैदिकसंस्काररहिता इति । अस्तु च तमां ब्रह्मसूत्रप्रस्थानशैवपक्षयोः सम्बन्धगन्धाभावः । नैतावता शैवमतस्याप्रामाणिकत्वं सिद्ध्येत् । वेदा हि भगवन्निश्वसितरूपा इति भवतां प्रमाणतमाश्चेत्, अस्माकमपि भगवता साक्षादेव बुद्धिपूर्वकमुपदिष्टाः वेदेभ्योऽपि प्रमाणतमा एव आगमाः । अबुद्धिपूर्वकवाक्यापेक्षया बुद्धिपूर्वकवाक्यानामेव प्रामाण्यातिशयः सर्वजनीनः । अतश्च

आगममूलत्वमात्रान्नाप्रामाण्यं शैवसंप्रदायस्य । वदन्ति च शैवग्रन्था इममंशं—' अथवा शिवनिश्वासश्रुतिभ्यस्ते शिवागमाः ।
अधिका शिववक्त्रेभ्यः साक्षादेव विनिर्गताः ॥ ' (क्रियासार )

इत्यादि । ग्रन्थविस्तरभयात्तु नाधिकं लिखामः । अतश्च किं साध्यं तवानेन कोलाहलेनेति चेत्—

हन्तैवमद्यैव मतिः प्रसन्ना तवेति सन्तो मुदमाप्नुवन्ति ।
एवं ऋजौ वर्त्मनि गच्छतस्ते कदापि हानिर्न भवेन्महात्मन् !

'न दूषयामोऽत्र च लेशतोऽपि किञ्चिन्मतं' इत्याद्युपक्रमं कुतो व्यस्मार्षीस्त्वम् ? वैष्णवमतात् आगमैकमूलकं शैवमतमेवोत्कृष्टमस्तु कामम् । न हि लोके सर्वेऽपि प्राणिनः एकाभिप्रायवन्तः स्युः । नापि वयं तथा संपादनेन जगदुद्दिधीर्षवो वा । भिन्नरुचिर्हि लोकः । तद्गच्छतु भवान् भवदभिमते मार्गे , न वयं निरुन्ध्मः ॥

परन्त्विदमेकमेवात्र वयं वदामः—शैवानां ब्रह्मसूत्राणां च सम्बन्ध वस्तुतो नास्त्येव । स तु अतिसमीपादेव कालात् इति । प्रार्थयामहे च विशुद्धान् शङ्कराचार्यभक्तान् भवतां शैवपक्षपातः वैष्णवविद्वेषश्च किं युक्तः ? इति दूरतो निरस्य मात्सर्यं आलोचयन्त्विति ॥

एवञ्च शैवमतस्य ब्रह्मसूत्राणां च सम्बन्धगन्धाभावात् तत्संबन्धं नूतनयोपलालयदिदं शैवभाष्यं अत्यन्तार्वाचीनकल्पितमेव ॥

[रामानुजाचार्याद्यपरिगृहीता उपनिषदः श्रीकण्ठेनोदाहृताः]

(८) श्रीशङ्करभास्कररामानुजाचार्याद्यैः अनुदाहृताः उपनिषदः श्रीकण्ठभाष्ये उदाहारिषत । 266पुटे कालाग्निरुद्रोपनिषत् 320पुटे रामोत्तरतापनीयोपनिषत् 331पुटे 350पुटे च शिवसङ्कल्पोपनिषत् च श्रीकण्ठभाष्ये उदाहृता । एकस्मिन् प्रस्थाने एवमितरानुदाहृतप्रमाणोदाहरणं इतरापेक्षया तस्यार्वाचीनतामावेदयेदेवेति विमर्शकानां सिद्धान्तः । अतश्चोक्तभाष्यापेक्षया श्रीकण्ठभाष्यं नवीनमेव ॥

[सुबालवाक्यमुदाहरद्‌ इदं भाष्यं श्रीभाष्यादर्वाचीनमेव]

(९) एवं श्रीकण्ठभाष्ये 'न तु दृष्टान्तभावात्'(2-1-9) इत्यत्र सुबालोपनिषदुदाहृता। सेयमुपनिषत् शङ्कराचार्यैर्नोदाहृता, श्रीमद्रामानुजाचार्यैरेवोदाहृता। तामुदाहरन् श्रीकण्ठः रामानुजानन्तरकालिक एव। ननु वैपरीत्यं कुतो न स्यादिति चेत्—

हन्त! न त्यजसि वक्रबुद्धितां सङ्कटेऽपि समये समागते।
सत्यमेव खलु कथ्यते जनैःस्वस्वभाव इह दुस्त्यजस्त्विति॥

सुबालोपनिषद्धि नारायणपारम्यैदंपरा रामानुजार्याणां पुरस्कारार्हा कथं श्रीकण्ठादरणमर्हेत? अपि च रामानुजार्यैः बहुत्र सेयमुपनिषदुदाहृता। श्रीकण्ठेन तु एकत्रैव। न हि स्वसमादृताया उपनिषद एकत्रैवोदाहरणं घटेत। अत इयमुपनिषत् नारायणपरेति मत्वा श्रीमद्रामानुजार्यैः वैष्णवाग्रेसरैः प्रकाशमानीता इति प्रतिभाति। श्रीकण्ठस्तु अवशादेकत्र तामुदाहरन् स्वस्य श्रीभाष्यचोरतां स्वयं प्रत्यतिष्ठिपत्॥

अपि च श्रीभाष्ये सुबालोपनिषद्वाक्योपादानस्थले सर्वत्र विन्यासविशेषं कथं वा ज्ञातुं प्रभवेस्त्वम्? स्वसिद्धान्तासाधारणप्रमेयसाधनावसरे कुत्रापि केवलं सुबालवाक्यं न प्रमाणीक्रियत इति चक्षुः प्रसार्यविलोकय महामते!

किं बहुना! प्रकृतमत्र एव श्रीभाष्यं श्रीकण्ठभाष्यं च विलोकय महात्मन्! जगद्ब्रह्मणोः शरीरशरीरिभावसाधनाय प्रथमं संप्रतिपन्नं श्रुतिवाक्यमुपादायैवानन्तरमुपोद्बलकतया केवलं सुबालवाक्यं उपात्तम्। सुबालोपनिषदः तदानीं सर्वसंप्रतिपत्त्यभावात् 'सुबालोपनिषदि च' इति विच्छित्तिविशेषश्च प्रदर्श्यते। श्रीकण्ठभाष्ये तु इदं सुबालवाक्यं संप्रतिपन्नश्रुतिवाक्यवदेव विच्छित्तिविशेषप्रदर्शनमन्तरेण उपादीयते। तेन च श्रीकण्ठभाष्यकाले सुबालोपनिषत्सर्वसंप्रतिपन्नत्वेन प्रसिद्धिं प्रापेति स्पष्टं ज्ञायते। एवञ्च श्रीकण्ठभाष्यं श्रीभाष्यादर्वाचीनमित्येतत् करबदरायितम्॥

ननु श्रीकण्ठभाष्येऽपि 'यस्यात्मा शरीरं' इति संप्रतिपन्नश्रुत्युपादानानन्तरमेव सुबालवाक्यमुपात्तमिति किमिति न पश्यसि त्वमिति चेत्—

हन्त ! किमेवमतिगभीरा ते शेमुषी ! श्रीभाष्ये खलु चेतनाचेतनयोरुभयोरपि भगवच्छरीरत्वे संप्रतिपन्नानि वाक्यान्युपादाय विच्छित्तिविशेषप्रदर्शनपूर्वकं चेतनाचेतनयोः उभयोः भगवच्छरीरत्वे सुबालवाक्यमुपात्तम् । श्रीकण्ठभाष्ये तु चेतनमात्रस्य भगवच्छरीरत्वे संप्रतिपन्नश्रुतिमुपादाय अचेतनस्य भगवच्छरीरत्वे परं सुबालवाक्यं विच्छित्तिविशेषप्रकारैव निरातङ्कमुपादीयत इत्यवधत्स्व कुशलमते ! एवं च शतधा भवता कण्ठशोषणेऽपि तटस्था विमर्शका जानीयुरेवात्र तत्त्वं—श्रीभाष्यात्सर्वथाऽर्वाचीनं श्रीकण्ठभाष्यमिति ॥

[जानात्येवेयमितिश्रुत्युदाहरणमपि अस्यार्वाचीनत्वगमकम्]

(१०) अपरश्चेदं चोरस्य सहजमचातुर्यं अवधेयं विमर्शकाग्रेसरैः । 'व्यतिरेको गन्धवत् तथा हि दर्शयति' (२-२-२७) इत्यत्र 'दर्शयति' इति सूत्रखण्डं विवृण्वन् श्रीकण्ठः 'जानात्येवायं पुरुषः' इति श्रुतिमुपादत्ते। इयं श्रुतिः कुत्र वर्तते ? केन वा ब्रह्मसूत्रभाष्यकारेणोपात्ता ? इति वक्तव्यं मुसलकिसलयमतिना । न हीयं श्रुतिः संप्रतिपन्नासु उपनिषत्सु उपलभ्यते । न वा शङ्कराचार्याद्यैरुदाहृता । यदि च भवदृशा श्रीकण्ठः शङ्कराचार्यात् प्राचीनः तदा शङ्कराचार्या अपि इमां श्रुतिं यत्र कुत्रचित्, अन्ततः पूर्वपक्षतया वा उपाददीरन् । यदि च रामानुजाचार्येभ्यः प्रचीनः सः तदापि अविगानेन तदुदाहरणं न घटेत ॥

ननु रामानुजार्यैर्वा तत् कथमुपात्तं युक्तम् ? श्रीकण्ठस्य वा स्वातन्त्र्येण तदुपादानं कुतो न घटताम् ? इति चेत्—रहस्यमिदं कथं ज्ञातुं प्रभवेस्त्वम् ?

तद्विद्धि प्रणिपाताद्यैः यद्यस्ति तव कौतुकम् ।
उपदेक्ष्यन्ति तत्तत्त्वं नव्यरङ्गेन्द्रयोगिनः ॥

तथा हि—श्रीमद्यामुनमुनिभिः आत्मसिद्धावियं श्रुतिरुपात्ता । स्वपरमाचार्यपरिगृहीतत्वात् श्रीमद्रामानुजैरविगानेनेयं श्रुतिः परिगृहीता । प्रदर्शयैतादृशं प्रमाणं श्रीकण्ठेन तदुदाहरणे। ननु यामुनार्यैर्वा सा कथमुपात्तुमर्हति चेत्, अममाधेयमत्रेदमप्रकृतम् । अथापि वदाम —यामुनग्रन्थेऽपि विन्यासविशेषो द्रष्टव्य आयुष्मता । तत्र हि धर्मभूतज्ञाननित्यत्वोपपादनावसरे प्रमाणत्वेन संप्रतिपन्नाः श्रुतीरुपादाय "अन्याश्च 'जानात्येवायं

पुरुषो ज्ञातव्यं तु न वेद ' इत्याद्याः " इति विचिकित्सितविशेषप्रदर्शनपूर्वकमियं श्रुतिरुपात्ता । शङ्करादिभिरनुदाहरणात् इतरश्रुतिवदेव नोपात्ता। अथापि काशिकाकारेण सुचरितमिश्रेण उदाहृतत्वात् इतरसंप्रतिपत्तिरप्यस्तीति कृत्वा पृथक्तस्या उपादानं कृतम् । स्वपरमाचार्यपरिगृहीतत्वात् श्रीमद्रामानुजैरविशेषेणैव इयं श्रुतिरुपात्ता । श्रीकण्ठेन तु अविगानेन तदुपादानं कथं घटतामिति निरूपय महामते !

ननु काशिकां दृष्ट्वा यामुनवदेव श्रीकण्ठ ... स्वातन्त्र्येण तदुदाजहारेति कुतो न स्यादिति चेत्—

तर्हि यामुनवदेव दर्शयेत रीतिभेदमिह वाक्यकैरखले ।
किञ्च न त्वमिह बुध्यसे कुतः व्याहृति निजवचस्सु दुर्मते !

सुचरितमिश्रः खलु शङ्कराचार्यादर्वाचीनः । तमनुसरन् भवद्गुरुः कथं शङ्कराचार्यादपि प्राचीन इति घोषयसि त्वमिति गुज्यते भवतो विरुद्धभाषणम् । ननु श्रीकण्ठं दृष्ट्वैव सुचरितोऽपि तामुदाजहारेति प्रत्यवस्थाने किं ब्रूयास्त्वमिति चेत्—

ब्रूयां विना निन्दनतस्तु किञ्चित् विधेरलङ्घ्यस्य जगत्त्रयेऽस्मिन् ।
भवादृशैर्योऽघटयद्विवादं दुराग्रहान्धीकृतदर्शनैर्मे ॥

एवं तर्हि शङ्करादिभिः वेदान्तिभिरियं श्रुतिः ... परित्यक्ता स्यात् । शङ्करादिभिरनुदाहृतत्वात् उदासीनेन सुचरितेनैवोदाहरणात् यामुनार्यैर्विन्यासविशेषेण उदाहृता । तैः परिगृहीतत्वात् श्रीमद्यतिवरैरविगानेनोदाहृता । तादृशं विनिगमकं प्रदर्श... त्व श्रीकण्ठेन तदुदाहरणे ॥

पश्य चौर्यनिरतात्मनां मतेर्विभ्रमं सहजमत्र दुर्मते !
शङ्कयात्तु कियतो हि वासरान् चौर्यमत्र विनिगूहितुं भवान् ॥

[श्रीकण्ठभाष्ये श्रीभाष्य दूषितमिति विमर्शकाः]

(११) श्रीकण्ठभाष्ये ' गतेरर्थवत्त्वं ' इत्यत्र श्रीभाष्यं दूषितमिति तटस्थाविमर्शका अभिप्रयन्ति * । तथा हि—ब्रह्मविदो देहवियोगकाल एव सर्वकर्मणामपि क्षयात् सूक्ष्मशरीरस्यापि निवृत्तेरापश्यकत्वात् कथं

* हयवदनराय , सूर्यनारायणशास्त्री ... ।

गत्यादिसंभव इतीमामाशङ्कां विद्यासामर्थ्यादेव सूक्ष्मशरीरावस्थितिमभ्युपगम्य पर्यहरन् श्रीभाष्यकाराः। नदिदं दूषयति श्रीकण्ठभाष्यं— 'यद्यपि विद्यासामर्थ्यात् देवयानेन गतिः तत्तद्देशविहारसंवादिकं अग्निमविहारादिवदुपपद्यते, तथापि यावद्ब्रह्मप्राप्ति धीसङ्कोचरूपसंसारानुवृत्तिः विद्यासामर्थ्यान्नोपपद्यते' इति। श्रीभाष्यं श्रीकण्ठभाष्यं च समकालं विमृशतां इदं श्रीकण्ठभाष्यं श्रीभाष्यमेव कटाक्षयतीति स्पष्टं भायात्। एवं खण्ड्यखण्डनभावस्य स्पष्टं प्रतीतावपि तटस्थविमर्शकैस्तथाङ्गीकारेऽपि तदपलापः केवलदुराग्रहमूलक एव वक्तव्य ॥

[हरदत्तानुयायी श्रीकण्ठः अत्यर्वाचीन एव]

(१२) श्रीकण्ठः खलु हरदत्तानुयायीति भवद्दीक्षितः असकृदुद्घुष्यति। हरदत्तश्च श्रीरामानुजार्यसमकालिक एव स्यादिति सुबहुविमर्शपूर्वकं स्थापयति सूर्यनारायणशास्त्री स्वीयशिवाद्वैतग्रन्थे आंग्लभाषात्मके। एवं हरदत्तस्यैव रामानुजसमकालिकत्वे तदनुयायी श्रीकण्ठ श्रीमद्रामानुजार्यादर्वाचीन इति दण्डापूपायितम्। परन्त्विदमत्र विस्मयावहं—यदयं सूर्यनारायणशास्त्री हरदत्तं रामानुजसमकालिकं वदन् श्रीकण्ठं श्वेताचार्यशिष्यं हरदत्तानुयायिनं च केवलं जानन्नपि अन्ते श्रीकण्ठः रामानुजसमकालिकः स्यादित्यभिप्रैतीति ॥

आस्तामिदं नात्र भवेत्तु हानिः, सत्यं कथञ्चित् प्रकटीकृतं हि।
कथं त्यजेयुस्सुग्रहोस्तु कालात् दृढप्ररूढां बत! वासनां ताम् ॥

[वल्लभमतीयाः श्रीकण्ठमर्वाचीनं वदन्ति]

(१३) श्रीवल्लभभाष्यव्याख्याता पुरुषोत्तमः खलु श्रीकण्ठं रामानुजमतचोरं असकृदावेदयति। एवं गिरिधरोऽपि स्वीयशुद्धाद्वैतमार्ताण्डे— 'शैवोऽप्येतेन विध्वस्तो यतस्तच्चोर एव हि' इत्याह। तद्व्याख्या च रामकृष्णभट्टीया—'तच्चोरः-रामानुजमतचोरः' इति ॥

न ह्येते रामानुजमतीयाः, येन तत्पक्षपातात्तथोक्तिरित्युच्येत। ननु पुरुषोत्तमः खलु वैष्णवत्वसामान्याभिमानादपि तथोक्तवान् स्यात् इति चेत्—भोः शृणु इदम्—

स्वपतिविभवहर्तॄन् दुर्जनान् द्वेष्टि साध्वी
तदिह कुलवधूनां भूषणं प्राहुरार्याः ।
न च खलु चतुरायाः युज्यते वारनार्याः
सकलफलवदान्ये पूरुषे द्वेषलेशः ॥

ननु दीक्षितः खलु न वैष्णवः नापि शैवः । किन्त्वद्वैती तटस्थः । ततश्च पुरुषोत्तमोक्तेरपि दीक्षितोक्तिरेव न्यायतो विश्वसनीयेति चेत्—

भवद्गुरुस्वरूपस्य स्थापनैकपरा वयम् ।
दीक्षितोक्तिरतो नैव विश्वासविषया मता ॥

[श्रीकण्ठभाष्यशैल्यापि नवीनता]

(१४) श्रीकण्ठभाष्यस्य शैल्यपि तस्यार्वाचीनतामावेदयेदेव । यद्यपि एतयोर्भाष्ययोः आनुपूर्व्यास्साम्यमत्यस्ति, अथाप्यनुकार्यानुकारित्वं आत्मसाक्षिकं दुरपह्नवमेव ॥

परन्त्विदं सम्यगवेहि धीमन् त्वत्तोऽपि दक्षः पुरुषोऽस्ति लोके ।
चोरोऽतिचातुर्ययुतोऽपि किं नु न गृह्यते राजभटैः प्रवीणैः ॥

किञ्च कुत्रचित् भाष्यद्वयोस्साम्येऽपि कुत्रचित् खलु वैरूप्यमप्यस्त्येव । तत्रत्यशैली श्रीभाष्यशैल्यपेक्षयाऽतिनवीनैव परिदृश्यते ॥

सहृदयहृदयैकवेद्येऽस्मिन् नाधिकं वक्तुमुत्सुकाम ॥

[विमर्शकास्सर्वेऽपि श्रीकण्ठमर्वाचीनं वदन्ति]

(१५) तटस्थविमर्शकविचक्षणास्सर्वेऽपि श्रीकण्ठं रामानुजानन्तरकालिकमेव वदन्ति । यथा—

(क) राधाकृष्ण. 'इण्डियन् फिलासिफि' नामकग्रन्थस्य द्वितीयभागे 723पुटे श्रीकण्ठं क्रैस्त14शतकस्थमलिखत् ॥

(ख) हयवदनरायश्च श्रीकरभाष्यभूमिकाग्रन्थे एनं 13शतकस्थमेवाब्रवीत् ॥

(ग) दासगुप्तोऽपि 'हिस्टरि आफ् इण्डियन् फिलासिफि' नामकग्रन्थस्य पञ्चमसंपुटे 11पुटे एनं क्रैस्त13शतकस्थमुवाच ॥

गत्यादिसंभव इतीमामाशङ्कां विद्यासामर्थ्यादेव सूक्ष्मशरीरावस्थितिमभ्युपगम्य पर्यहरन् श्रीभाष्यकाराः। तदिदं दूषयति श्रीकण्ठभाष्यं— 'यद्यपि विद्यासामर्थ्यात् देवयानेन गतिः तत्तद्देशविहारसंवादिकं अग्निमविहारादिवदुपपद्यते ; तथापि यावद्ब्रह्मप्राप्ति धीसङ्कोचरूपसंसारानुवृत्तिः विद्यासामर्थ्यान्नोपपद्यते' इति। श्रीभाष्यं श्रीकण्ठभाष्यं च समकालं विमृशतां इदं श्रीकण्ठभाष्यं श्रीभाष्यमेव कटाक्षयतीति स्पष्टं भायात्। एवं खण्ड्यखण्डनभावस्य स्पष्टं प्रतीतावपि तटस्थविमर्शकैस्तथाङ्गीकारेऽपि तदपलापः केवलदुराग्रहमूलक एव वक्तव्य ॥

[हरदत्तानुयायी श्रीकण्ठः अत्यर्वाचीन एव]

(१२) श्रीकण्ठः खलु हरदत्तानुयायीति भवद्दीक्षित. असकृदुद्धुष्यति। हरदत्तश्च श्रीरामानुजार्यसमकालिक एव स्यादिति सुबहुविमर्शपूर्वकं स्थापयति सूर्यनारायणशास्त्री स्वीयशिवाद्वैतग्रन्थे आंग्लभाषात्मके। एवं हरदत्तस्यैव रामानुजसमकालिकत्वे तदनुयायी श्रीकण्ठ श्रीमद्रामानुजार्यादर्वाचीन इति दण्डापूपायितम्। परन्त्विदमत्र विस्मयावहं—यदयं सूर्यनारायणशास्त्री हरदत्तं रामानुजसमकालिकं वदन् श्रीकण्ठं श्वेताचार्यशिष्य हरदत्तानुयायिनं च केवलं जानन्नपि अन्ते श्रीकण्ठः रामानुजसमकालिक. स्यादित्यभिप्रैर्तेति ॥

आस्तामिद नात्र भवेत्तु हानिः, सत्यं कथञ्चित् प्रकटीकृतं हि।
कथं त्यजेयुर्म्मुग्रहोस्तु कालात् दृढप्ररूढां बत ! वासनां ताम् ॥

[वल्लभमतीयाः श्रीकण्ठमर्वाचीन वदन्ति।]

(१३) श्रीवल्लभभाष्यव्याख्याता पुरुषोत्तम· खलु श्रीकण्ठं रामानुजमतचोरं असकृदावेदयति। एवं गिरिधरोऽपि स्वीयशुद्धाद्वैतमार्ताण्डे— 'शैवोऽप्येतेन विध्वस्तो यतस्तच्चोर एव हि' इत्याह। व्याख्या च रामकृष्णभट्टीया—'तच्चोरः-रामानुजमतचोर' इति ॥

न ह्येते रामानुजमतीया, येन तत्पक्षपातात्तथोक्तिरित्युच्येत। ननु पुरुषोत्तम. खलु वैष्णवत्वसामान्याभिमानादपि तथोक्तवान् स्यात् इति चेत्—भोः शृणिवदम्—

स्वपतिविभवहर्तॄन् दुर्जनान् द्वेष्टि साध्वी
तदिह कुलवधूनां भूषणं प्राहुरार्याः ।
न च खलु चतुरायाः युज्यते वारनार्याः
सकलफलवदान्ये पूरुषे द्वेषलेशः ॥

ननु दीक्षितः खलु न वैष्णवः, नापि शैव । किन्त्वद्वैती तटस्थ । रतश्च पुरुषोत्तमोक्तेरपि दीक्षितोक्तिरेव न्यायतो विश्वसनीयेति चेत्—

भवद्गुरुस्वरूपस्य ख्यापनैदंपरा वयम् ।
दीक्षितोक्तिरतो नैव विश्वासविषयो भवेत् ॥

[श्रीकण्ठभाष्यशैल्यापि नवीना]

(१४) श्रीकण्ठभाष्यस्य शैल्यपि तस्यार्वाचीनतामावेदयेदेव । यद्यपि एनयोर्भाष्ययोः आनुपूर्वीसाम्यमप्यस्ति, अथाप्यनुकार्यानुकारित्वं आत्मसाक्षिकं दुरपह्नवमेव ॥

परन्त्विदं सम्यगवेहि धीमन् त्वत्तोऽपि दक्षः पुरुषोऽस्ति लोके ।
चोरोऽतिचातुर्ययुतोऽपि किं नु न गृह्यते राजभटैः प्रवीणै ॥

किञ्च कुत्रचित् भाष्यद्वयोस्साम्येऽपि कुत्रचित् खलु वैरूप्यमप्यस्त्येव । तत्रत्यशैली श्रीभाष्यशैल्यपेक्षयाऽतिनवीनैव परिदृश्यते ॥

सहृदयहृदयैकवेद्येऽस्मिन् नाधिकं वक्तुमुत्सुकाम ॥

[विमर्शकास्सर्वेऽपि श्रीकण्ठमर्वाचीन वदन्ति]

(१५) तटस्थविमर्शकविचक्षणास्सर्वेऽपि श्रीकण्ठं रामानुजानन्तरकालिकमेव वदन्ति । यथा—

(क) राधाकृष्ण. 'इण्डियन् फिलासिफि' नामकग्रन्थस्य द्वितीयभागे 723पुटे श्रीकण्ठं क्रैस्त '4शतकस्थमलिखत् ॥

(ख) हयवदनरायश्च करभाष्यभूमिकाग्रन्थे एनं 13शतकस्थमेवाब्रवीत् ॥

(ग) दासगुप्तोऽपि ' रि आफ् इण्डियन् फिलासिफि' नामकग्रन्थस्य पञ्चमसंपुटे 1पुः क्रैस्त13शतकस्थमुवाच ॥

(घ) चिन्तामणिस्तु क्रैस्ताऽशतकीयमेवाकथयत् इति प्रसिद्धम् ॥

(ङ) सूर्यनारायणशास्त्र्यपि हरदत्तं श्रीरामानुजसमानकालिकं वदन् तदनुयायिनं श्वेताचार्यशिष्य श्रीकण्ठं श्रीरामानुजानन्तरकालिकमवशादङ्गीचकार । कदापि तु श्रीकण्ठानुकारिणं रामानुजं वक्तुमपि न प्रायतत सः ॥

तदेवमद्वैतिभिरेव विमर्शकैः श्रीकण्ठं श्रीरामानुजार्यादर्वाचीनमेव वदद्भिः श्रीकण्ठानुकारिणं रामानुजं वदतः दीक्षितस्य स्वरूपं बहिः प्रकाशितमेव ॥

तदिह बहुभिरेभिस्त्वप्रकम्प्यैः प्रमाणै
सकलबुधमतोक्तैर्विस्तरेणाभ्यधायि ।
अवदधत बुधेन्द्रा लक्ष्मणार्यस्य भाष्यात्
अभिनवबुधसृष्टं नूतनं शैवभाष्यम् ॥

[श्रीकण्ठभाष्यस्य वास्तविककालनिर्णयः]

ननु श्रीलक्ष्मणार्यस्य भाष्याद्यदि नवं भवेत् ।
श्रीकण्ठभाष्यं, तर्ह्यस्य कथ्यतां कालनिर्णयः ॥

वयमपि स्मरामः एनमेव विषयम् । जानीमश्च तस्य वास्तविककालानिर्णये पुनःपुनरङ्कुरन्तीं भवत्प्रत्याशामिति । निर्मूलयामो भवत्प्रत्याशां सांकुरच्छेदम् । शृणुतावधानेन । एकस्य ग्रन्थस्य कालनिर्णये अयमेवाभ्यर्हितोपायोऽभिमतः सर्वविदुषां—इदं भाष्यं केनकेन कुत्रकुत्र वोद्धृतम्, अस्मिंश्च भाष्ये के वा ग्रन्थकाराः, के वा ग्रन्थाश्चोद्धृता इति ॥

तत्रैतद्ग्रन्थेऽयं मुख्यो विशेषोऽवगन्तव्यः । ब्रह्मसूत्रभाष्यं रचयन् खल्वाचार्यः स्वोक्तार्थे स्वाचार्यादीनां अन्येषां वा स्वपूर्वतनानां वचनादिकं यत्रकुत्रचित् प्रमाणयेत् इति लोकमर्यादा । लोकातीते त्वस्मिन् भाष्ये स्वकालेयत्तापरिज्ञानपरिहारायैव केवलं यस्य कस्यापि ग्रन्थस्य ग्रन्थकारस्य वा नामग्रन्थादिकं बुद्धिपूर्वकमेव परिहृतमिति तत्पठितॄणां स्पष्टं ज्ञायेत । मङ्गलश्लोके परं श्वेताचार्यनाम गृहीतम् 'नमः श्वेताभिधानाय नानागमविधायिने' इति । परन्तु कोऽसौ श्वेताचार्य इति प्रश्ने तु गगनमेव वीक्षणीयं तैः । अष्टाविंशतिसंख्याकेषु शैवयोगाचार्येषु

अयमाद्य इति पुराणादवगम्येत । 'नानागमविधायिने' इति पदमपि स्वरसतः तादृश एवार्थे लगेत् । एतद्व्याख्यायां दीक्षितसंकटं पश्यतां अयमप्यर्थः मनसि स्फुरेत्— यदयमेव दीक्षितो वैष्णवविद्वेषात् तत्प्रतीपं शैवमार्गं प्रतिष्ठापयिषुः तन्मूलग्रन्थत्वेन किञ्चिद्भाष्यं स्वयमेव श्रीकण्ठनाम्नि कल्पयामास । भाष्यकारस्यादावाचार्यमङ्गलाभावन्यूनतापरिजिहीर्षयेव यं कञ्चन संयुयुक्षुः प्रसिद्धव्यक्तिनामग्रहणे यः कश्चिदाक्षिपेदपीति भीत्या पौराणिक श्वेताचार्यमेवायूयुजत् । ततः पौराणिकाचार्यस्य लौकिकार्वाचीनभाष्यकाराचार्यत्वासंभवं मन्यमानेन तेन तद्व्याख्यायां महान् संकटोऽनुभाव्यः संवृत्त—इति । विचारयामश्चैतत्तत्त्वमनुपदमेव ॥

हयवदनरायस्तु प्रदर्श्य कतिपयशासनानि अमुं क्रैस्त 13शतकीयमाह । परन्तु तत्प्रदर्शितशासनेषु ब्रह्मसूत्रभाष्यकर्तृत्वेन श्रीकण्ठशिवाचार्यस्य कस्याप्युल्लेखो नैव दृश्यते ॥

श्रीकण्ठभाष्यविचारैदंपरप्रवृत्तिः सूर्यनारायणशास्त्री तु महतीं चर्चां मुधा विधाय–' यद्यपि महोत्सवविधौ अघोरशिवाचार्यः स्वाचार्यपरंपरायां श्रीकण्ठनामानं कञ्चिन्निर्दिशति—तथाऽपि तत्र परंपरायां श्वेताचार्यनाम्नोऽदर्शनेन प्रकृतश्रीकण्ठः स न स्यादित्येव प्रतिभाति ' इति विलिख्य–(पु-73-75) अन्ते स्वाशयसारमेवमावेदयामास—' श्रीकण्ठभाष्यस्य उमापतिशिवाचार्यकृतपौष्करभाष्यगत उल्लेख एव प्राचीनतमः । उमापतिश्च स्वीयसङ्कल्पनिराकरणाख्ये ग्रन्थे स्वस्य कालं स्पष्टं निरदेक्षत् । तत्रोक्तशकवर्षं क्रैस्त1313वर्षमितः । परन्तु पौष्करभाष्ये 16शतकीयन्यायामृतस्योल्लेखो दृश्यते । अतोत्र त्रयी गति –इदं भाष्यं क्रैस्त 1313 कालिकोमापतिशिवाचार्यकृतं न स्यात् , अन्यद्वा न्यायामृतं तत्स्यात् ; न्यायामृतवचनं प्रक्षिप्तं वा स्यात् । एषु को युक्त इति निर्णय क्लिष्ट एव । एतत्परित्यागे शिवलिङ्गभूपालीयः (क्रैस्त 15शतक) श्रीकण्ठभाष्योल्लेख एव प्राचीनतमः' इति (पुट-77) ॥

परन्तु–सङ्कल्पनिराकर्तुः उमापतिशिवाचार्यात् भिन्न एवायं पौष्करभाष्यकर्ता उमापतिशिवाचार्यः । उमापतिशिवाचार्यः शुद्धद्राविडपण्डितः । तेन मार्कि 15ग्रन्था विरचिताः शुद्धद्राविडभाषायामेव । यद्ययं संस्कृतपण्डितोऽपि स्यात् तर्हि एकमपि वाऽन्यं संस्कृतग्रन्थं ग्रथयेत्सः । अत इदं पौष्करभाष्य तत्कर्तृकं न भवितुमर्हत्येव । तत्रापि क्रैस्त 16शतकी-

यन्यायामृतयोल्लेखात् विवादस्यावसर एव नास्ति । न्यायामृतग्रन्थनामोल्लेखपूर्वकं परिदृश्यमानन्यायामृतगतश्लोके तथैवानुपूर्व्यां उपलभ्यमाने अन्य न्यायामृतः स्यात्, स भागः प्रक्षिप्तः स्यात् इत्यादिकथनं मुधाऽऽग्रहं केवलं प्रदर्शयेत् ॥

यत्र यत्र मम बाधकं भवेत् कल्पितं तदिह नूतनैरिति ।
शुष्ककण्ठमिह घुष्यतां मुधा, किन्तु मा सदसि सूक्ष्मबुद्धिनाम् ॥

अतश्च प्रकृतपौष्करभाष्यं न्यायामृतादप्यर्वाचीनमेवेति तत्रोल्लेखः नास्य भाष्यस्य प्राचीनतां गमयेत् ॥

एवं शिवलिङ्गभूपालेन श्रुतिसूक्तिमालाव्याख्यायां श्रीकण्ठभाष्यमुल्लिखितमिति कथनं परप्रतारणमेव । श्रीकण्ठभाष्ये प्रमिताधिकरणे ईशानशब्द एव शिवासाधारण इत्युक्तं, हरदत्तस्तु ईश्वरपदमेव तादृशमाहेत्यादिकं पूर्वमेव (३१ पुटे) विवृतम् ॥

शिवलिङ्गभूपोऽपि स्वव्याख्यायां उपोद्बलकतया पाणिनिजैमिनिसूत्राद्यविशेषेण व्याससूत्रमपि कुत्रचिदुदाहरन् स्वयं सूत्रार्थं विवृणोति, न तु कुत्रापि 'तथा च भाष्यं' इत्यादिरीत्या यया कयाचनविधया किञ्चिद्भाष्यं सूचयत्यपि । प्रत्युत 2,90 इत्यादिश्लोकव्याख्यानादौ "वैय्यासिकाः, मीमांसकाः, वैय्यासिकमते, मीमांसकमते" इत्यादिरीत्या व्यवहरन्नयं शिवलिङ्गभूपः स्वस्य वैय्यासिकत्वाभावमेवावेदयति । यदि च श्रीकण्ठभाष्यं शिवलिङ्गभूपदृष्टं स्यात् तदा बहुषु स्थलेषु, अन्तरधिकरणान्तर्याम्यधिकरणाद्यनेकाधिकरणविषयवाक्यं उदाहरताऽनेन कथं वा तदधिकरणसूत्रभाष्यादिकं न स्मर्येतापि । किं बहुना! ईशानशब्देश्वरशब्दयो शिवासाधारण्यविषये श्रीकण्ठहरदत्तयोः पूर्वपश्चिमगामित्वस्य स्पष्टतया तत्र वा कथमयं श्रीकण्ठभाष्यं पश्यन् उदास्तु मलं भवेत् । अतः शिवलिङ्गभूपालकाले श्रीकण्ठभाष्यं सर्वथा नासीदेव ॥

नन्वास्तामखिलं प्रोक्तमिदं दुर्बलचिन्तनम् ।
ब्राह्ममस्त्रं प्रयोक्ष्यामो धारयेदं दुरुत्तरम् ॥

अस्मदीयैः श्रीकण्ठभाष्योल्लेखनमिदमस्तु कोणे । भवदीयैरेव सुदर्शनसूरिभिः स्वीयश्रीभाष्यव्याख्यायां श्रुतप्रकाशिकायां श्रीकण्ठभाष्यं दूषितमेव । तथा हि लिङ्गभूयस्त्वाधिकरणे—'केचित् नारायणपरं ब्रह्मेति

वाक्ये नारायणपरमितिपदं नारायणात्परमित्यन्तर्गतसमासं वदन्ति— तदयुक्तम्' इति इदं भाष्यं स्पष्टमनूद्य दूषितम् ॥

सुदर्शनसूरेर्गुरुभिः वात्स्यवरदार्यैरपि तत्त्वनिर्णये इदं भाष्यं दूषितम्। तद्यथा—" न च 'नारायणपरं ब्रह्म' 'नारायणपरो ज्योतिः' इति वाक्ययोः पञ्चमीसमासः शङ्कनीयः " इत्यादि ॥

वात्स्यवरदार्यकालश्च क्रैस्त 13शतकाद्यभाग इति इतिहासविदः। एतच्च क्रैस्त 13शतकात्पूर्वमेव श्रीकण्ठभाष्यं लब्धप्रचारमासीदिति भवद्भिरेवात्र शिलालेखनात्साधितमिति कथमस्य भाष्यस्यार्वाचीनतां स्वैरं मन्यसे !

भो ब्रह्मवादिन् जगदेकवन्द्य ! नमांसि भूयांसि भवन्तु मे ते ।
परन्तु मा दर्शय चातुरीं मे जानामि सम्यक् तव तु स्वरूपम् ॥

भो ब्रह्मास्त्रविद्वरिष्ठ ! श्रुतप्रकाशिकायां तत्त्वनिर्णये वा श्रीकण्ठभाष्यप्रत्यभिज्ञापकमेकमपि वाऽक्षरं किमस्तीति वक्तुं किं पारयेस्त्वम् ?

यदि नाम श्रीकण्ठभाष्यं सुदर्शनार्यैरवलोकितं स्यात् तदा श्रुतप्रकाशिकायां इतरसम्मतसूत्रार्थयोजनादूषणावसरे कथं श्रीकण्ठभाष्यं लेशतोऽपि नोट्टङ्कितं स्यात् । एवमेव वरदार्येणापि यदि श्रीकण्ठभाष्यं विलोकितं स्यात् तदा अनुपपत्त्याद्यधिकरणश्रीकण्ठभाष्यं कथमनूद्य न दूषितं स्यात् । स्वोक्तार्थे लिङ्गभूयस्त्वाधिकरणं प्रमाणयन्नयं ग्रन्थकारः विरुद्धार्थबोधकं भाष्यं पश्यन्नपि कथं मौनमवलम्बेत् । अतः तत्त्वनिर्णयकर्त्रा सर्वथा श्रीकण्ठभाष्यं न वीक्षितमेव । एवञ्च श्रुतप्रकाशिकायां तत्त्वनिर्णये च श्रीकण्ठभाष्यस्मरणं सर्वथा दुस्साधम् ॥

किं बहुना ! श्रीवैष्णवाग्रेसरैः परमतमर्मभेदननासीरधाटीभटैः श्रीमद्वेदान्तदेशिकैः कुत्राप्यनुल्लेखनादिदं भाष्यं सर्वथा तेभ्योऽनन्तरकालिकमेव । ' निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे ' इति खलु अभिदधत्येत आचार्याः ॥

ननु स्तोत्रभाष्ये शिवपारम्यनिराकरणात् श्रीकण्ठमतमिदं दूषितमेवेति चेत्—अयि भो बृहस्पते ! शिवपारम्यदूषणमात्रात् श्रीकण्ठभाष्यमेव दूषितमिति कथं मन्यसे त्वम् ? शिवपारम्यव्यवस्थापनं न हि

श्रीकण्ठोपज्ञम् । किं बहुना ! स्तोत्रभाष्यगतं "पुरुषोत्तमसमाख्या त्वनधिगतशब्दानुशासनादिवृत्तान्तैः कैश्चित्केवलरूढेत्युक्तं 'रूढ्या तु कामं पुरुषोत्तमोऽस्तु' इति" इति वाक्यं कस्येति वद मेधाविन् ! न हीदं श्रीकण्ठीयम् । अतश्च वात्स्यवरदसुदर्शननिगमान्तमहादेशिकानां काले श्रीकण्ठभाष्यातिरिक्तः कश्चित् शिवपारम्यपरो ग्रन्थ आसीदेवेति अकामेनाप्युररीकर्तव्यमेव । एतेन श्रुतप्रकाशिकातत्त्वनिर्णयादिकं श्रीकण्ठभाष्यमेव कटाक्षयतीति दुर्वचमेव । एवञ्च श्रीमन्निगमान्तमहादेशिककालपर्यन्तं श्रीकण्ठभाष्यस्य सत्त्वे न किञ्चिदपि प्रमाणमुपदर्शयितुं शक्यम् ॥

वस्तुतस्तु श्रीकण्ठभाष्यस्योल्लेखो दूषणं वा षोडशशतककालिकस्याप्पयदीक्षितस्य कालादनन्तरमेव । तथा हि–शिवाग्रयोगिविरचिते संस्कृतशिवज्ञानभाष्ये शिवज्ञानयोगिविरचिते द्राविडशिवज्ञानभाष्ये च नीलकण्ठनाम्नाऽयं श्रीकण्ठः परिग्राह्यत्वेनोपलालितो दृश्यते । महाचार्यैः श्रीवैष्णवैः स्वीयपाराशर्यविजये, मध्वमतीयैः राघवेन्द्रयोगिभिः स्वीयचन्द्रिकाप्रकाशे, विजयीन्द्रतीर्थैः स्वीयपरतत्त्वप्रकाशिकादौ चेदं भाष्यं निरसनीयत्वेनोट्टङ्कितं दृश्यते । वल्लभमतीयैः पुरुषोत्तमगिरिधरप्रभृतिभिरिदं भाष्यमनूद्य दूषितमिति प्रथितमेव । त एते सर्वेऽपि अप्पयदीक्षितस्य समकालिकाः अनन्तरकालिका वा इति विमर्शकसिद्धान्त । एवञ्चैते ग्रन्थाः सर्वेऽपि श्रीकण्ठभाष्यं अप्पयदीक्षितकालिकमेव द्रढयन्ति ॥

किमधिकोक्त्या–व्यासतीर्थाः स्वीयब्रह्मसूत्रमध्वभाष्यव्याख्यानस्य चन्द्रिकाख्यस्योपक्रमे 'प्रतिसूत्रं प्रकाश्येते घटनाघटने मया । स्वीयान्यपक्षयोः सम्यक् विदां कुर्वन्तु सूरयः' इति प्रतिजानानाः शङ्कररामानुजमते एव सर्वत्र दूषयन्ति । न कुत्रापि वैष्णवाग्रेसरस्यावश्यकर्तव्यं श्रीकण्ठदूषणं सूचयन्त्यपि । चन्द्रिकाव्याख्यातारो राघवेन्द्रतीर्थाः प्रकाशाभिधे तद्व्याख्याने तत्र तत्र श्रीकण्ठभाष्यं दूषयन्ति । तेन च श्रीकण्ठभाष्यं व्यासतीर्थानन्तरस्मिन् राघवेन्द्रतीर्थपूर्वसिद्ध काल एव सृष्टमिति करबदरायितम् । तथा च षोडशशतकानन्तरकालिकैरेव ग्रन्थकारैः उल्लेखितमिदं श्रीकण्ठभाष्यं सर्वथाऽप्पयदीक्षितकालिकमेवेति वज्रलेपायितम् ॥

द्रुह्यन्ति ये नैव निजात्मने, ते जानीयुरेवाखिलमत्र तत्त्वम् ।
आत्मद्रुहां दूषणजालमत्र न लक्षणीयं निरयेन्धनानाम् ॥

[दीक्षित एव श्रीकण्ठभाष्यकर्ता]

अत्र तत्त्वविद प्राहुरमुमेवाप्पयं गुरुम् ।
श्रीकण्ठभाष्यकर्तारं प्रमाणैः बहुभिर्दृढम् ॥

तत्र तावदिदं प्रथममवधेयं विमर्शकतल्लजैः—इदं श्रीकण्ठभाष्यं अप्पयदीक्षितसमानकालिकमेव वरीवृत्यते । तदानीं च यदि नाम कश्चित् शैवाचार्यः ब्रह्मसूत्रभाष्यरचनानुगुणप्रौढपाण्डित्यवान् अप्पयदीक्षितादन्यः वस्तुतो जीवन् अभूत् तादृशस्य अन्यत्र यत्र कुत्राप्युल्लेखादिकं अवश्यं भाव्यमेव । न हि कस्यचिदाचार्यवरिष्ठस्य मतप्रतिष्ठापकधुरन्धरस्य यत्र कुत्रचित् ग्रन्थे, गुरुपरंपरायां, शिलाशासनादौ वाऽनुल्लेखः युक्तिमान् । तत्रापि शैवमतानुयायिनां बाहुल्येऽनुभवसिद्धेऽपि तद्भाष्यकारादिविषये किञ्चिदपि चिह्नादिकं कथं नोपलभ्येत । अत इदं भाष्यं अप्पयदीक्षितेनैव श्रीकण्ठनाम्नि नूतनतया सृष्टमित्यभ्यूहितुमस्त्यवकाशः ॥

ननु तर्हि तेन स्वनाम्नैव कुतो भाष्यं न कृतम् ? तादृशपण्डितस्य रामानुजभाष्यानुकरणशरणं वा कथं घटतामिति चेत्—

अत्रायमितिहासः स्मर्तव्य सर्वैः—

आसीन्महाचार्य इति प्रसिद्धो रामानुजाचार्यमतप्रवर्तकः ।
अद्वैतिनस्त्वप्पयदीक्षितस्य येनाभवद्वादकथा जिगीषया ॥
आदावभूदेष महार्यदर्यः पराङ्मुखो वेदशिरोगुरूक्तौ ।
प्राचीनदौर्भाग्यविपाकहेतोः को वा भवेद्विध्यवशो महीतले ॥
आदावभूदप्पयदीक्षितोऽपि सौहार्दवान् वैष्णवसत्तमेषु ।
यतोऽभवत् * वैष्णववंशजाता पितामही त्वप्पयदीक्षितस्य ॥
यादवाभ्युदयनामविश्रुतं काव्यरत्नमपि देशिकैः कृतम् ।
व्याख्यदेष खलु दीक्षितो मुदा मुक्तकण्ठमपि शंसते स्म तान् × ॥

---

* मध्वतन्त्रमुखमर्दनभूमिका द्रष्टव्या । यद्यपि केचित् परिमलादौ श्रीवैकुण्ठाचार्यस्य स्ववंशकूटस्थत्वेन कथनात् अयं श्रीवैकुण्ठाचार्यवंशादौहित्रो न भवितुमर्हतीत्यभिप्रयन्ति—तथापि श्रीवैकुण्ठाचार्यनामकव्यक्तिद्वयसंभवात् प्रसिद्धेतिह्यबाधनं न युक्तमिति विमर्शकाः ॥

× 1 9श्लोकव्याख्यायां— इत्थं विचिन्त्यास्सर्वत्र भावास्सन्ति । कवितार्किकसिंहस्य

तस्मिन् काले जगति विततं दर्शनं वैष्णवानां
श्रीमद्रामानुजनिगदितं यत् विशिष्टैक्यवादि ।
श्रुत्यन्तार्थैः श्रुतिगणमुखैः स्थापितं निष्प्रतीपं
सर्वश्रेष्ठं बुधबहुमतं निस्समं राजते स्म ॥

एवं निरस्तप्रतिपक्षवर्गाः गर्वात् तृणीकृत्य जगच्चरन्तः ।
सङ्कल्पसूर्योदयनाटकस्य प्रदर्शनायायतमन्त चैते ॥

आकारयामासुरिमे च वैष्णवाः तमप्ययं नाटकवीक्षणाय ।
प्रदर्शयामासुरिमेऽतिदक्षाः तन्नाटकं सर्वजनप्रशंस्यम् ॥

तत्रैकदृश्यस्य * विलोकनेन प्रोद्वेजितस्सन्नयमप्पयार्यः ।
विनाशयाम्यद्य तु वैष्णवानां गर्वं कथञ्चिदिति निश्चिकाय ॥

अथाकारयामास वादाहवाय कोपान्धदृष्टिर्महाचार्यवर्यम् ।
विशिष्टैकसिद्धान्तमुन्मूलयामीत्यास्फोटयामास दोर्दण्डयुग्मम् ॥

पराजितो भजेत् पक्षं विदुषो जयशालिनः ।
इत्येवं समयं कृत्वा वादं तौ तु प्रचक्रतुः ॥

वादाहवः प्राचलदेनयोर्महान् जिगीषुणोस्तत्र बहून्यहानि च ।
स पूर्वपक्षं तु विचिन्तितमेऽप्पयो दुरुत्तरमत्यजवाद गर्वितः ॥

अशकन्न यदा तदुत्तरे निममज्जायमपारसङ्कटे ।
समयोऽतिययौ तदा ततो व्यतिसृष्टा च सभा सभासदैः ॥

दैवाद्रक्षितमानोऽयं महार्यस्तत्र संसदि ।
श्वोऽहं वक्ष्यामि सिद्धान्तमित्युक्त्वा स्वगृहं ययौ ॥

अधिगत्य गृहं व्यचिन्तयत् स तु तस्योत्तरमात्मशक्तितः ।
अशकन्न तदापि चोत्तरे गतधैर्यो विललाप दुःखितः ॥

श्रुत्यन्तेषु प्रसिद्धं सकलजनहितं दर्शनं वैष्णवानां
श्रीमद्रामानुजार्यप्रभृतिगुरुवरैः रक्षितं निष्प्रतीपम् ।
तस्येदानीं विपत्तिर्मम तु जडमतेर्वै द्विदोपादवाप्ता
किं वेदानीं तु कुर्यामिति बहु विलपन् निर्वृतिं नैव भेजे ॥

---

काव्येषु ललितेष्वपि ' इत्युक्तम् । एवमनेन श्रीदेशिककृतपादुकासहस्राणि व्याख्यातमिति केचिन्मन्वते ॥

* कस्यचिदद्वैतिना विशिष्टाद्वैतिना पराजयरूपदृश्यस्य ।

इत्थं चिन्ताऽऽकुलीभूतं मज्जन्तं शोकसागरे ।
पारं नैवापि पश्यन्तं कृच्छ्रान्निद्रा समाययौ ॥

ब्राह्मे मुहूर्ते किल देशिकेन्द्रः स्वप्ने बभूवास्य महादयालुः ।
सर्वार्थसिद्धिं शतदूषणीं च विलोकयाद्येति जगादचैनम् ॥

ततः प्रबुद्धः श्रुतिशेखरार्यवचः स्मरन् हृष्टमना महार्यः ।
संपाद्य कोशावथ तत्र दृष्ट्वा तदुत्तरं विस्मयमाप गाढम् ॥

किमिह विचरितं बुधा मया बहुकालं निगमान्तदेशिके ।
विरुद्धेन विमूढबुद्धिना विफलं जन्म कृतं स्व गर्विणा ॥

एतादृशेऽपि मयि मूर्खतमे कृतघ्ने
दोषानवीक्ष्य दयते खलु देशिकेन्द्रः ।
इत्थं विशोच्य बहुधा भजते स्म शान्तिं
स्वात्मार्पणेन गुरुवर्यपदाब्जयोः सः ॥

तदनुपरदिनेऽसौ संस्मरन्तो महार्यो
[illegible]ललिगयुग्मं देशिकेन्द्रस्य हृद्यम् ।
अ[illegible]मु[illegible]दीतया [illegible]ज्यमाना बुधौघै-
र्धिषण इव सुधर्मा [illegible] सभा संविवेश ॥

तमन्वयो वीक्ष्य [illegible]गतं तं यशस्विनं मत्स[illegible]ति महार्यम् ।
तदैव सोऽभूद्धत[illegible]दर्पो यथा वीक्ष्य विहङ्गराजम् ॥

ततस्तया [illegible]गि[illegible]कयुक्तिव्रजैः दीक्षितमाशु जिग्ये ।
यथाप्रतिज्ञं स [illegible] दीक्षितोऽपि भेजे विशिष्टैक्यमतं मनोज्ञम् ॥

हन्त ! दृश्यमवलोक्य यादृशं रोषितोऽभवदसौ तु नाटके ।
तथ्यतस्तदवलोकितं बुधैः दीक्षितेन्द्रकृपया तदातनैः ॥

को वाऽतिगच्छेदपि वीरमानी नारायणास्त्रं जगतीतलेऽस्मिन् ।
तथैव वेदान्तगुरुस्य युक्तीः को वाऽतिगच्छेदपि वागधीशः ॥

नैव त्वयाऽहं विजितो महार्य ! श्रीदेशिकेन्द्रैः खलु निर्जितोऽहम् ।
इत्येवमुक्त्वाऽप्पयदीक्षितोऽसौ तदाऽवहद्भार्गवरामवृत्तिम् ॥

तदाऽवहन् परां मुदं च सर्व एव सज्जना
महार्यमेनमादरात् प्रशंसिरे सभासदः ।
ननर्तुरेव वैष्णवाश्च शिश्लिषुः परस्परं
जगुः कलं मुदा तदाऽभवन् भृशं च गर्विताः ॥

उद्वेलमेषामवलोक्य गर्वं जज्वाल कोपाद्यमप्पयार्यः ।
तथाऽपि न प्राभवदेष किञ्चित् कर्तुं च वक्तुं च पराजितत्वात् ॥
यदा प्रतीकारविधावशक्तो बभूव तत्राप्पयदीक्षितोऽसौ ।
विवेश तं क्रूरतरा त्वसूया वैरं च तीव्रं स्वपरात्ययाय ॥
निश्चिकाय सुदृढं मनस्यसौ येन केन विधिनापि वैष्णवान् ।
वर्धमानविभवान् दिनेदिने संरुणध्मि भृशगर्वितानिति ॥

तदाप्रभृत्यसावभूदनल्पवैरभावना-
विदूषितान्तरङ्गवान् जनेऽखिलेऽपि वैष्णवे ।
यदावकाशमाप तीव्रवैरमस्य चेतसि
तदैव बुद्धिविभ्रमः स्वयं त्वमुं समाविशत् ॥

तदा प्रभृत्येव महार्यवर्याः भक्ता बभूवुः श्रुतिशेखरार्ये ।
व्याख्यन् मुदा ते शतदूषणीं च चक्रुर्गुरोर्वैभवसंग्रहं च ॥
काले ययुस्तावति ते महार्याः दौर्भाग्यतो हन्त ! जगत्त्रयस्य
हृदि स्मरन्तो गुरुसत्तमस्य पादाम्बुजं विष्णुपदं मनोज्ञम् ॥
ततो न कोऽप्यभूत्तत्र प्रतिरोद्धा बुधाग्रणीः ।
वैष्णवद्वेषदुष्टस्य दीक्षितस्य प्रवृत्तिषु ॥

यथाप्रतिज्ञं खलु दीक्षितोऽसौ स्वयं विशिष्टैक्यमतं भजन्नपि ।
अथाऽपि रोषात् बत ! वैष्णवेषु शैवं विशिष्टैक्यमतं नव जगौ ॥
अयं कथञ्चित्तु विनिग्रहीषुः श्रीवैष्णवान् कोपविदूषितात्मा ।
श्रीचिन्नतिम्मादिकशैवभूपान् समाश्रयामास निजार्थसिद्ध्यै ॥

तद्भूपप्रेरितस्सोऽयं विष्णुविद्वेषकर्शितः ।
शिवतत्त्वविवेकादीन् रचयामस दीक्षितः ॥
ईशानशब्दं शिव एव रूढं व्यासो वदन् स्पष्टयतीशमेव ।
वेदान्तवेद्यं परमं च तत्त्वमित्येवमाद्यत्र जगाद चैषः ॥
केनेत्थमुक्तं तु चिरन्तनेन किं वा प्रमाणं भवदुक्तितोऽन्यत् ।
एवं हि पृष्टेन तु दीक्षितेन भाष्यं तदा दर्शनीयमासीत् ॥
स्वीयं त्वसौ शैवमतं नवीनं चिरन्तनं ख्यापयितुं प्रवृत्तः ।
अन्यस्य कस्यापि तु नाम्नि भाष्यं नवं विरच्य प्रकटीचकार ॥
स्वयं विशिष्टैक्यमते स्थितत्वात् सदैव तस्मिंश्च कृतश्रमत्वात् ।
कालाक्षमत्वाच्च बलात्तदास्य श्रीभाष्यकोशानुकृतिस्तु जाता ॥

तस्य प्रकाशनविधौ धृतकङ्कणश्च
व्याख्यां चकार विततामपि दीक्षितोऽसौ।
वादावलीमपि चतुर्मतसंग्रहादी-
न्यन्यानि चेवमकरोत्स दुराग्रहान्ध ॥

* श्रुतप्रकाशप्रमितैरसौ हि ग्रन्थैर्विवृण्वद्द्विजशैवभाष्यम्।
श्रीभाष्यतुल्यं प्रकटीचिकीर्षुः हन्त ! स्वचौर्यं प्रकटीचकार ॥

एवं स्वयं विनष्टोऽसावपरानप्यनाशयत्।
मूर्खाणां तु क्रुधन्धानामित्थं हि सहजा गतिः ॥

न चैव युक्ता तव शैवमैत्रीत्यद्वैतिभिः कैश्चिदयं ** प्रबोधितः।
शाठ्याच्च धाष्टर्याच्च जगाद रुष्टः श्रीशङ्करार्यानपि शैवपक्षगान् ॥

क्रुद्धो हन्यात् गुरूनित्यवितथवचन प्राह वल्मीकजन्मा
किन्त्वेतत् क्वाप्यदृष्टं जगति तत इद किन्नु मिथ्या वचः स्यात्।
इत्थं सन्ततचिन्ता भवत बुधवरा दीक्षितेऽस्मिन् कृतज्ञाः
संक्रुद्धः शङ्करार्य निजगुरुमपि यो निर्घृणस्संजघान ॥

किन्तु चित्रमिह दीक्षिते त्वभूत् कोपहेतुपुरुषस्तु हन्यते।
कोपमाप स तु वैष्णवाज्जनात् सञ्जघान गुरुवर्यमात्मन ॥

श्रीशङ्करार्यपरिभावितनीलकण्ठः
काले बभूव किमु दीक्षितनामधेयः !
अद्वैतिवेषविनिगूहितशैवभावः
शैवं चकार समये बत ! शङ्करार्यम् ॥

आक्षितः पुनरपि शाङ्करैस्स कैश्चित्
| बोधेन्द्रप्रमुखबुधैः महात्मभिश्च।
तत्प्रीत्यै कथमिव लब्धसत्त्ववेष-
स्त्वानन्दादिमपदलहरीं वितेने ॥

अथापि तास्मिन्नपि दीक्षितोऽयं शिवस्य पादाभरणस्थरत्नम्।
विष्णुं वदन् वैष्णववैरमेव प्रकाशयामास तमोऽन्धदृष्टिः ॥

---

* श्रुतप्रकाशिका हि षड्त्रिंशत्सहस्रग्रन्थपरिमिता। हालास्यनाथशास्त्रिणा शिवार्कमणिदीपिकाभूमिकायां सापि व्याख्या तावत्परिमिता इत्युक्तम् ॥

** बोधेन्द्रसरस्वतीप्रभृतिभिः। | हरिहराद्वैतभूषणादौ।

कश्चित्तटाकं करशोधनाय गतश्च्युतः तत्र पपात तीरे ।
रोषात्तटाकोपरि मूर्ख एष. त्यक्त्वैव शुद्धिं निरगात्तटाकात् ॥
ततोऽपि मूर्खः खलु यस्तु तादृक् सरःप्रतीकारविधानबुद्ध्या ।
कुकूपमासाद्य निजानुगैश्चाप्यपातयच्चानपतत् स्वयं च ॥
एवमेव खलु दीक्षितोऽप्यसौ वैष्णवप्रतिविधानभावतः ।
नाशमाप ऋजुवर्त्महानतोऽनाशयच्च बत ! शाङ्करान् परान् ॥
तदा प्रभृत्येव दधुर्विरोधमद्वैतिनः केऽपि च वैष्णवेषु ।
एवं कलिः प्रादुरभूदलङ्घ्य श्रीशङ्करार्याशयनाशनाय ॥
एवं वैष्णवविद्वेषशालिनं दीक्षितं त्वमुम् ।
श्रीकण्ठभाष्यकर्तारं विद्धि निस्संशयं बुधाः ॥

ननु भोः ! कस्याग्रतो वाचयसीदं पुराणम् ? प्रमाणानि प्रदर्शय !

वत्स ! मास्तु तव संभ्रमो वृथा सूत्तरं तव दिशन्त्यमत्सराः ।
मा च दर्शय विलोकयन् परानात्मवत्तु निजधृष्टतां मुधा ॥

वत्स ! कुत्रांशे तव विप्रतिपत्तिः ? किमप्पयस्य महार्यैः पराजयविषये ? उत तस्य श्रीकण्ठभाष्यकर्तृत्वविषये ? उत तस्य शङ्कराचार्यप्रतीपगामित्वे ? पश्य भोः ! तटस्थेनावैष्णवेन श्रीनिवासराङ्कोरटे नाम्ना कर्णाटभाषायां लिखितं रघुनाथविजयाख्यं ऐतिहासिककथाग्रन्थम् । तत्र हि 75पुटे महाचार्यैरप्पयपराजयः , अप्पयेन श्रीकण्ठभाष्यरचनं च उपावर्णीति प्रसार्यतां चक्षुः । न वयं तस्योपदेष्टार ॥

किञ्चेदमपि विमर्शनीयं—शिवतत्त्वविवेकः , शिवकर्णामृतं , शिवार्कमणिदीपिका , शिवाद्वैतनिर्णयः , शिवानन्दलहरी इत्ययं दीक्षितकृतशैवग्रन्थानामुत्पत्तिक्रमः । इदं च उत्तरोत्तरग्रन्थेषु पूर्वपूर्वतनग्रन्थोल्लेखादेवावगम्यते । तत्र शिवतत्त्वविवेके वैष्णवविद्वेषः उद्वेलो नरीनृत्यते । अनन्तरं च क्रमक्रमशः तत्कृशीभवति इत्ययमंशोऽवधेयः ॥

एवं शिवाद्वैतनिर्णयादौ श्रीकण्ठाचार्यं भक्तिपुरस्सरं अभिवादयन् शिवतत्त्वविवेके शिवकर्णामृते च तं कुतो वा लेशतोऽपि न स्मरत्यपि ; प्रत्युत शिवाद्वैतनिर्णयादौ श्रीकण्ठपरमगुरुत्वेनोद्गीयमाणं सुदर्शनाचार्यमेकमेवोपलालयतीत्यपि अवधीयताम् ॥

एवं शिवतत्त्वविवेके शिवकर्णामृते च 'नारायणपरं ब्रह्म' इति श्रुतिं अन्तर्गततत्पुरुषसमासत्वेन व्याख्यन्नपि श्रीकण्ठभाष्यानुपपत्त्यधिकरणं सर्वथा न स्मरति । तथैव 'ईशानो भूतभव्यस्य' इति कठश्रुतिगतमीशानशब्दं शिवासाधारणं साधयन् 'शब्दादेव प्रमितः' इति सूत्रं प्रदर्शयन् श्रीकण्ठं तद्भाष्यं वा कुतो वा लेशतोऽपि न स्मरतीत्यपि चिन्त्यताम् । प्रत्युत शिवकर्णामृते 54पुटे 'नारायणात् परं ब्रह्मेति पाशुपतानां व्याख्या' इति निर्वाहं, सुदर्शनाचार्यकृतं उपास्योपासकयोरभेदभावनाकृतोऽभेद इति निर्वाहं च प्रदर्शयन् श्रीकण्ठभाष्यं सर्वथाऽप्रदर्शयन् 'नारायणात् परं ब्रह्म' इत्यादिव्याख्यानं ब्रह्मसूत्रप्रस्थानानारूढमेव प्रदर्शयत्ययं दीक्षित इत्यप्यवलोक्यतां सम्यक् । तत्र पाशुपतपदं प्रयुञ्जन् अयं दीक्षितः तेषां पाशुपताधिकरणविषयत्वादवैदिकत्वं, सुदर्शनाचार्यस्य वैदिकशैवत्वं चाभिमनुते इति स्पष्टम् । तमिममर्थं अवैदिकं पूर्वं ख्यापयन्नयं अनुपपत्त्यधिकरणशिवार्कमणिदीपिकायां 'सुदर्शनाचार्यैः परपक्षाभिप्रायेण तदुक्तं । वस्तुतस्तु नारायणात्परं इत्यर्थ एव प्रामाणिक' इति वदन् पुनर्वैदिकत्वेन स्थापयितुं प्रायतत इत्यप्यवधीयताम् । एवमनुपपत्त्यधिकरणे सुदर्शनोक्तिं प्राग्विवादं वदन्नयं ज्योतिरधिकरणशिवार्कमणिदीपिकायां तमेव मुख्यसिद्धान्तमकथयदहो ! इत्यप्यवधीयताम् ॥

एवं 30-35पुटोक्तदिशा हरदत्तश्रीकण्ठयोः पूर्वपश्चिमगामित्वेऽपि श्रीकण्ठं हरदत्तानुयायिनं अयं कुतः प्रकटयतीत्यपि विमृश्यताम् ॥

शिवतत्त्वविवेकादौ विष्णुं उच्चावचं विनिन्दन्नयं आनन्दलहर्यां 35 श्लोकव्याख्यायां स्वस्य विष्णुभक्तत्वं कुतो वा नटयतीत्यपि चिन्त्यताम् ॥

तदेतत्सर्वविमर्शनेऽयमेव निर्णयः स्वयमापतेन्निर्मत्सराणां-अयं हि दीक्षितः महाचार्यपरामृत विशिष्टाद्वैतस्वं र्ःकुर्वन्नपि वैष्णवविद्वेषात् सिद्धान्तभागविवाद परित्यज्य शैववैष्णवकलहमुद्बोधयिषुः शिवतत्त्वविवेकं शिवकर्णामृतं च प्रथमं प्रणिनाय । अनन्तरं स्वोक्तार्थे पूर्वतनसम्मतिप्रदर्शनकाले प्राप्ते 'स्थितमिदं शैवमतानुसारिणि ब्रह्मसूत्रभाष्य एव' इत्यकथयत् । आनीयतां तद्भाष्यमिति पृष्टः अहर्निशमुपविश्य श्रीकण्ठनाम्नि किञ्चिद्भाष्यं स्वयं रचयामास । कालस्याधिकस्याभावात् विशिष्टाद्वैततत्त्वस्य स्वहृदयारूढत्वात् वैष्णवदौहित्रस्य श्रीभाष्यग्रन्थपरिश्रमस्य सहजतः प्राप्तत्वाच्च तदेतस्मिन् भाष्ये श्रीभाष्यानुकरणमवर्जनीयमापतितम् ॥

एवं स्वकृतभाष्यस्य संप्रदायमूलकत्वख्यापनाय यं कञ्चनाचार्यं निर्दिदिक्षुः यस्य कस्यचिल्लौकिकस्य निर्देशे 'सः किंकालिकः ? किंदेशः ? इत्यादिरीत्या यः कश्चित् पृच्छेदपीति मत्वैव अलौकिकं श्वेताचार्यं आदावयूयुजत् । पौराणिकस्य श्वेताचार्यस्य लौकिकाचार्यगुरुत्वासंभवं पृष्टः कैश्चित् 'नानागमविधायिने' इत्यादिपदं तत्र शिवार्कमणिदीपिकायां विध्वंसयितुं प्रववृते ॥

अथापि तादृश श्वेताचार्यस्य गगनकुसुमसोदरतां पश्यद्भिः कैश्चिदाक्षिप्तः अयं दीक्षितः श्रीकण्ठं हरदत्तानुयायिनमेव ख्यापयामास शिवाद्वैतनिर्णये । एवं श्रीकण्ठं हरदत्तानुयायिनं वदन् शिवतत्त्वविवेकशिवकर्णामृतयोः सुदर्शनाचार्यमुल्लिखन्नपि श्रीकण्ठं न सर्वथा सस्मारेत्यनेन श्रीकण्ठभाष्यस्य शिवतत्त्वविवेकानन्तरकालिकत्वं आनन्दलहर्यादिपूर्वकालिकत्वं च स्पष्टमित्यस्य भाष्यस्य दीक्षितोपज्ञत्वं ग्रीष्मातपगतदिग्गजायितम् ॥

ननु पूर्वमनुल्लेख तदा तेनादृष्टत्वमात्रमावेदयेत् , नासत्त्वमिति चेत्—तर्हि अन्येन वा केन तत् दृष्ट इति कथय बृहस्पते ! दीक्षितात् पूर्वं केनाप्यदृष्टत्वात् पूर्वं 68पुटादौ प्रदर्शितदिशा अस्य भाष्यस्य दीक्षितकालिकत्वसिद्ध्या च पूर्वं तन्नासीदेवेति रिक्तमपि सह्यमेव भवता ॥

नन्वस्त्विदमपि । अथापि तस्य दीक्षितकृतत्वं कथमुच्यते ? वत्स ! किमेवं संभ्रमः ! दीक्षितकाले तत्तादृशः अन्य कश्चन श्रीकण्ठः यदि स्यात् यत्र कुत्राप्यन्यत्र , शासनादौ वा तदुल्लेखः आवश्यक । श्रीकण्ठाचार्यनामकः ब्रह्मसूत्रभाष्यकर्ता तु न कुत्राप्यन्यत्र दीक्षितकाले तत्पूर्वं वा प्रदर्शयितुं शक्य इति पूर्वमसकृन्निरूपितम् । एवञ्चास्य भाष्यस्य दीक्षितकृतत्वं दण्डापूपायितम् । प्रकृतमनुसरामः ॥

एवं वैष्णवविद्वेष शैवाग्रहश्च किं ते युक्त इति बोधेन्द्रसरस्वतीप्रभृतिभिः पर्यनुयुक्तः सः शङ्कराचार्यानेव शैवान् प्रकाशयामास शिवाद्वैतनिर्णये। हरिहराद्वैतभूषणादिभिः खण्डिते तस्मिन् बोधेन्द्रसरस्वतीमुखैः शिवविष्णुसाम्यमिव प्रतिपादयन्तीं शिवानन्दलहरीं प्रणिनाय । पूर्वं शिवतत्त्वविवेकादौ अनुवादानर्हशब्दैः विष्णुं विनिन्दन्नयं शिवानन्दलहर्या (श्लो35)—'वेदविभागार्थमेवावतीर्णेन सकलवेदतात्पर्याभिज्ञेन सर्वज्ञशिखामणिना भगवता वेदव्यासेन , पुलस्त्यवरप्रदानलब्धदेवतापारमार्थ्य-

वेदनेन श्रीपराशरेण अन्यैश्च महर्षिभिः वेदोपबृंहणार्थं प्रणीतेषु श्रीमन्महाभारतविष्णुपुराणादिषु निश्चितपरब्रह्मभावस्य सद्भिरसर्वैरपि अविगानेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित्कोणे निर्विष्टमन्त्रार्थवादपुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते। तथा चेन्मूर्धा च शतधा भवति। वेदवैदिकद्रोहो वेदनाद्रोहश्च जायते। अतो नारायणः परब्रह्मकोटिरित्येवास्माकं सिद्धान्त' इति विष्णुद्वेषाभावं नटयन् तत्रैवानन्दलहर्यामुपक्रमे 'पादारविन्दाभरणे यदीये दधाति नीलोत्पलतां मुरारिः' इति शैवाग्रहं विष्णुविद्वेषं चोद्वमयत्यहो ! इति पश्यन्तु निर्मत्सराः॥

अपि च महाचार्याः पाराशर्यविजये शिवार्कमणिदीपिकागतदीक्षितोक्तीरेव नीलकण्ठनाम्नि उदाहरन्तीत्येतदपि तदानीं दीक्षितातिरिक्तनीलकण्ठस्य खरविषाणसोदरतामवगमयति॥

एवं मीमांसाविचारगर्भाः श्रीकण्ठभाष्यजिज्ञासाधिकरणपङ्क्तयोऽपि अत्र साक्षिण्यो भवितुमर्हन्ति॥

किं बहुना ! पूर्वमनुपदमुपदर्शितरीत्याऽस्य भाष्यस्य कालेयत्ताज्ञानपरिहारायैवात्र यस्य कस्यापि ग्रन्थस्य ग्रन्थकारस्य वोल्लेखादिकं बुद्धिपूर्वकं परिहृतमित्येतदेवास्य दीक्षितकृतित्वं द्रढयति। दीक्षितोक्तदिशा यदि नाम श्रीकण्ठनामकः कश्चित् हरदत्तादुपरी स्यात् स कथं हरदत्तसम्मतमैक्यभावनाशीनैक्यव्यपदेशं उभयलिङ्गाद्यधिकरणे वदन्नपि हरदत्तं तद्ग्रन्थं वा नोल्लिखेत्? वस्तुतस्तु हरदत्तश्रीकण्ठयोः पूर्वपश्चिमगामित्वमेवेत्यसकृदुक्तम्। आहत्य सर्वमिदं विमृशतां तत्त्वं स्पष्टं भायादेव॥

शिवानन्दलहरीभूमिकायां हालास्यनाथशास्त्री शिवानन्दलहरीदर्शनात् पूर्वं दीक्षितं तान्त्रिकशैवं विष्णुविद्वेषिणं च घोषयतां उत्तरं दातुमशक्तः स्वयं विषण्णचित्तोऽभूदिति कथयति। एतेन शिवानन्दलहरीपूर्वतनग्रन्थाः दीक्षितं तान्त्रिकशैवं विष्णुविद्वेषिणं चावेदयन्तीति तैरेवाभ्युपगतं भवति। एवं वदन्नयं शास्त्री दीक्षितवदेवात्मानं विनिगूहितुं प्रयतते—यत आनन्दलहर्युपक्रमश्लोकः दीक्षितं लब्धविवेकं सर्वथा न प्रकटयति, अपि तु नटनमात्रं कुत्रचिद्विष्णुविद्वेषाभावप्रकटनमित्यनुपदमेवोक्तम्॥

एतादृशाग्रहशीलः अयं न श्रीकण्ठभाष्यमात्रं, अपि तु तदनुगुण-पुराणादिकमपि प्राकल्पयदिति किं वदन्ती न निर्मूलेति विदांकुर्वन्तु ॥

नेत्रकोशीये नारायणीये—(90-5श्लो)

श्रीशङ्करोऽपि भगवान् सकलेषु तावत्
त्वामेव मानयति यो न हि पक्षपाती ।
त्वन्निष्ठमेव स हि नामसहस्रकादि
व्याख्यत् भवत्स्तुतिपरश्च गतिं गतोन्ते ॥

इति दृश्यते । एतद्ग्रन्थकर्ता च किञ्चिदिव अप्पयदीक्षितपूर्वकालिक इति तद्भङ्गिभिराता ज्ञायते । अत्र व्याख्या ‘ भवत्स्तुतिपरः—श्रीमत्पादादिकेशस्तुतिं कुर्वन् गतिं-मोक्षं गतः, न तु शिवस्तुतिपरः ’ इति । एतत्परिशीलने इदानीं शङ्कराचार्यनाम्ना लब्धप्रचारा बह्वयः शिवस्तुतयः न शङ्कराचार्यकृताः, अपि तु दीक्षितादिभिः श्रीकण्ठभाष्यवदेव नूतनतया सृष्टा इति प्रतिभाति ॥

अथवा शङ्कराचार्यशिष्यपरंपरायामागतानामपि शङ्कराचार्यत्वेनेदानीमपि बहुलं व्यवहारात् अर्वाचीनेन केनचिच्छङ्कराचार्येण कृता स्युः । आदिशङ्कराचार्यास्तु सर्वथा दीक्षितप्रातिकूला एवेति दुरपह्नवं विबुधगुरुणाऽपि । तदेव प्रचुरभावात् सतां गर्हिततया सरण्या श्रीकण्ठभाष्यं दीक्षितेनैव कृतमिति दुरपह्नवम् ॥

ननु विशिष्टाद्वैततत्त्वं दीक्षितायोपदिष्टवन्तो भवन्महाचार्यास्तदानीं कुत्र गता ? कुतो वा तैर्न शिक्षितो दीक्षितो वैष्णवतत्त्वमपि इति चेत्—उक्तमत्रानुपदमेव ‘ काले ययुस्तावति ते महार्याः ’ इति । किं प्रमाणमत्रे चेत् पश्यतु भवानेव पाराशर्यविजयादिकम् । तत्र हि दीक्षितं खण्डयितुमुपक्रममाणा ते महार्या न यथावत्साकल्येन च तं खण्डयन्ति, किन्तु लेशत एव खण्डयन्ति । तदिदमगमयति दीक्षितकोलाहलः कात्स्न्र्येन न विलोकितः स्यात्तैरिति ॥

ननु अशक्तिरपि तत्र हेतुः स्यादिति चेत, अशक्तिर्न तेषां, अपि तु तवैव तत्त्वदर्शने । पाराशर्यविजयेऽनूद्यमाना जिज्ञासाधिकरणपङ्क्तयः शिवार्कमणिदीपिकागताः । परन्तु ता ‘ नीलकण्ठस्तु ’ इति नीलकण्ठीयत्वेनोपात्ताः । दृश्यते तु शैवभाष्ये तत्कर्तुर्नाम श्रीकण्ठ इति । तदेवं

नीलकण्ठनाम्ना श्रीकण्ठभाष्यमुपात्तुं प्रवृत्ता एते दीक्षितपङ्क्तिरुदाजह्रुरिति इदं वैचित्र्यं कस्य हेतोः ? इदमेवात्र तत्त्वम्—महाचार्याणां काले शिवार्कमणिदीपिका, श्रीकण्ठभाष्यं च न लब्धप्रचारमासीत् । किन्तु शङ्करार्यस्य प्राचीनत्वसाधने प्रवृत्तैः दीक्षितादिभिः माधवीयशङ्करविजयाद्यम्भेन नीलकण्ठमेव तत्कर्तृत्वेन स्थापने प्रवृत्तैः प्रकाशितं स्वयं तद्भाष्यमपश्यन्त ऋजुमतयो नीलकण्ठनाम्नैव तन्मतमनूदितवन्तो महाचार्याः । तद्भाष्यस्य स्वयमदृष्टत्वात् खण्डशः यतः कुतश्चित्समासादितशिवार्कमणिदीपिकाभागमेव शैवभाष्यं मन्वाना एते नीलकण्ठनाम्ना शैवभाष्यमुदाहरन्तः शिवार्कमणिदीपिकामेवोदाजह्रुः । एवञ्च सर्वं महाचार्याणां कालस्यैव दीक्षितप्रवर्तितशैवकोलाहलानभिज्ञता अवगमयति । अत एव '4पुटोक्ते रघुनाथविजयेऽपि दीक्षितस्य शैववैष्णवविवादः अन्येन ...णयाचार्येण समजनीत्येव कथ्यते । अतश्च महाचार्या दीक्षितकोलाहलकाले नासन्नित्यत्र न संशयलेशोऽपि । अतश्च—

> स्वच्छसुस्वादुतोयं नवनवविकसत्पङ्कजश्रेणिपूर्णं
> संक्रीडद्राजहंसव्रजकलनिनदं सुन्दरक्षेत्रहारि ।
> भोग्यं सर्वस्य जन्तोरपि जगति सरोरत्नमेकं यदासीत्
> हन्तेदानीं तदेतत् वनमहिषमहाक्रोधपात्रं बभूव ॥

[दीक्षित. शङ्कराचार्यखण्डक.]

ननु भोः ! शिवाद्वैतनिर्णयशिवानन्दलहर्यादौ हि श्रीकण्ठशङ्कराचार्ययोः सामरस्यं साधितं दीक्षितेन । अतश्च—

> शंसामहे सत्यगवेषणं ते नूनं भवेत्सत्यमपि त्वदुक्तम् ।
> परन्तु दुस्साधमिदं तवास्य श्रीशङ्करार्याशयखण्डकत्वम् ॥

> न विश्वससि चेद्वत्स ! विश्वासं जनयामि ते ।
> किन्त्वात्मद्रोहमाधाय मा भवेर्नरकेन्धनम् ॥

> किन्त्विहेदमवधेयमञ्जसा नात्र किञ्चिदिह साध्यते नवम् ।
> दर्शयामि परमत्र दीक्षितं शङ्करार्यवचसां तु खण्डकम् ॥

1—विष्णोर्वामपदाब्जसंभवधुनीं मूर्ध्ना शिवो धारयन्
अन्वर्थं निजनाम चक्र इति हि श्रीशङ्करार्या जगुः ।

शैवस्त्वप्पयदीक्षितो न सहते श्रीशङ्कराचार्याशयं
दुर्युक्त्या च निराचकार स कथं * श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः—“ आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात् पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयश्शंभुजटाविभूषणमणिः ” (गङ्गाष्टके ४ )

दीक्षितः—‘ गङ्गापि मैव भवता करिचर्मधारिन् मूर्ध्ना धृता मधुरिपोश्चरणात्क्षरन्ती ’ (ब्रह्मतर्कस्तवे२७)

2—रुद्रादित्यमुखान् हि दैवतगणान् निध्यायतां योगिनां
विष्णुध्यानपरो वरिष्ठ इति हि श्रीशङ्करार्या जगुः ।
शैवस्त्वप्पयदीक्षितस्तमवदत्तद्विपरीत्यादहो !
रुद्रोपासकमुत्तमं स तु कथं श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः—‘ योगिनामपि सर्वेषां ’ इत्यत्र गीताभाष्ये “ योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये यो मां सेवते स मे युक्ततमः अतिशयेन युक्तो मतः ”

दीक्षितः—‘ अमाहाद्भ्रमान्मोहात् ’ (शि.त.वि.62 श्लो)इत्यादौ बहुत्र विष्णूपासनान् उच्चावचं निन्दतीति न तिरोहितम् ॥

3—देशे यत्र हि वासुदेवविषये निन्दा नरैः श्रूयते
वस्तव्यं न तु तत्र सद्भिरिति हि श्रीशङ्करार्या जगुः ।
शैवस्त्वप्पयदीक्षितो हि मनुते तस्यैव निन्दां परं
स्वर्गार्थस्य हि साधनं स तु कथं श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः—‘ वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसं—इति कात्यायनवचनात् यत्र देशे वासुदेवनिन्दा तत्र वासो न कर्तव्यः ’ (वि.स भा.) ॥

दीक्षितः–आनन्दलहर्यां विष्णोः ओयभावादिरूपनैच्यापादनं दोषत्वेन कथयन्नपि उपक्रमे ‘ पादारविन्दाभरणे यदीये दधाति नीलोपलतां मुरारिः ’ इति निन्दति ,(76गुटो छन्दः) । शिवतत्त्वविवेकादौ तथा बहुधा निन्दतीति चैतत् नापिहितं विदुषाम् ॥

---

* अत्र तत्पुरुषः बहुव्रीहिश्च विवक्षितः ।

(४) यद्रूपं मधुसूदनेन परमं पार्थाय सन्दर्शितं
तद्रूपं किल वैष्णवं समवदन् श्रीशङ्करार्याः स्फुटम् ।
शैवस्त्वप्पयदीक्षितः परिभवन् श्रीशङ्करार्यान् गुरून्
रौद्रं रूपमुवाच तत् स तु कथं श्रीशङ्करार्यप्रिय ?

शङ्कराचार्याः—' द्रष्टुमिच्छामि ते रूपमैश्वरं (गी,११.) इत्यत्र ' ऐश्वरं-वैष्णवं रूपं ' इति स्पष्टं विवृण्वन्ति ॥

दीक्षितः—शिवतत्त्वविवेकादौ ' ऐश्वरं रौद्रं रूपं ' इति साग्रहं साधयति ॥

(५) गीतायां प्रतिपाद्यमानमनघं नारायणं माधवं
षाड्गुण्यादिसमन्वितं समवदत् श्रीशङ्करार्यो गुरुः ।
शैवस्त्वप्पयदीक्षितः परिभवन् श्रीशङ्करार्यं , शिवं
गीतावेद्यमुवाच हन्त ! स कथं श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः—' वासुदेवाख्यं परं ब्रह्म अभिधेयभूतं विशेषतोऽभिव्यञ्जयत् गीताशास्त्रं ' (गीताभाष्योपोद्घाते) ॥

दीक्षितः—शिवतत्त्वविवेकादौ(श्लो-16) गीतावेद्यः परमशिव एवेत्याह ॥

(६) वेदैरप्यखिलैः पुराणसहितैः वेद्यं तु नारायणं
सर्वोत्कृष्टमुवाच शङ्करगुरुः श्रीवैष्णवाग्रेसरः ।
शैवस्त्वप्पयदीक्षितस्तु बहुधा तं खण्डयन् वैष्णवं
रुद्रं तादृशमाह हन्त ! स कथं श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः-' सर्वे वेदास्तात्पर्येण तमेव वदन्तीति शब्दसहः ' " कथितः वेदादिभिः अयमेव परत्वेन कथित , सर्वैर्वेदैः कथित इति वा । ' सर्वे वेदा यत्पदमामनन्ति ' ' वेदे रामायणे पुण्ये भारते भरतर्षभ । आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते ' इति श्रुतिस्मृत्यादिवचनेभ्यः " (स.ना.भा)

अत्र तारकब्रह्मानन्दीया विवृतिः-' वेदैः प्रतिपाद्यमानोऽपि न तात्पर्येणेत्याशंक्य तात्पर्यलिङ्गप्रदर्शनपूर्वकं विष्णोरेव तात्पर्यं दर्शयन्तीं स्मृतिं पठति—वेद इति । आदिमध्यावसानेषु स एव प्रतिपाद्यत इति तात्पर्यलिङ्गप्रदर्शनेन स एव तात्पर्यविषयो वेदादीनाम् ' इति ॥

दीक्षितः—शिवतत्त्वविवेकादौ रामायणमहाभारतादीनां च शिव एव वेदादीनां तात्पर्यमिति बहुधा साधयति ॥

(७) तद्विष्णोरिति मन्त्रवेद्यमवदन्नारायणं सर्वगं
मुक्तप्राप्यमनुत्तमं परपदं श्रीशङ्करार्यो गुरुः ।
शैवस्त्वप्पयदीक्षितोऽयमवदत् नारायणादुत्तमं
मुक्तप्राप्यमुमापतिं कथमसौ श्रीशङ्करार्यप्रियः ?

शङ्कराचार्या –'विष्णोर्वासुदेवाख्यस्य परमात्मन ' (कठ.उ.भा) । सहस्रनामभाष्ये बहुत्रास्य मन्त्रस्य विष्णुपरत्वमुक्तम् ॥

दीक्षित –विष्णोरपि परमं पदं–प्राप्यस्थानं, अथवा विष्णोर्नारायणादपि परमं–उत्कृष्टं पदं–स्थानं (शि त.वि.46श्लो) इत्याह ॥

(८) अन्तर्यामिणमाह सर्वजगतां नारायणं श्रीपतिं
सर्वप्राणिगुहाशयं त्वृजुमतिः श्रीशङ्करार्यो गुरुः ।
शैवस्त्वप्पयदीक्षितो न सहते श्रीशङ्करार्याशयं
रुद्रं तादृशमाह हन्त ! स कथं श्रीशङ्करार्यप्रियः ?

शङ्कराचार्याः—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति' 'उत्तमः पुरुषस्त्वन्य परमात्मेत्युदाहृतः । यो लोकत्रमाविश्य विभर्त्यव्यय ईश्वर ' इत्यादौ सर्वत्रापि 'ईश्वरः ईशनशीलः नारायणाख्य ' इति वदन्ति । अन्तर्यामिब्राह्मणभाष्येपि 'य ईश्वरो नारायणाख्यः ते मम सर्वभूतानां च अन्तर्यामी ' इत्याहुः ॥

दीक्षितस्तु–उक्तविपरीतमेव वदति शिवतत्त्वविवेकादाविति प्रथितम् ॥

हरदत्तः ईश्वरशब्दमेव शिवासाधारणं मनुत इति पूर्वमेव (31पु)कथितम् । शङ्कराचार्यास्तु ईश्वरशब्दं विष्णुपरमेव मन्वते । दीक्षितस्तु शिवपारम्यं ब्रह्मसूत्रारूढं सिषाधयिषु ईशानशब्दं शिवासाधरणं मनुते । परन्तु शङ्कराचार्या कठवल्यां(4-5) 'ईशानं–ईशितारं' इति विवृण्वन्त ईशानपदमपि यौगिकमेव मन्वत इत्यवधेयम् ॥

(९) साक्षाच्छिष्यवरस्तु शङ्करगुरो श्रीपद्मपादाभिधः
प्रावोचत्स्वगुरुं निरस्तभसितं श्रीवैष्णवाग्रेसरः ।
शैवस्त्वप्पयदीक्षितस्समवदत् यो ब्रह्मविद्याः पराः
भस्माङ्गा निखिला हठात् स तु कथं श्रीशङ्करार्यप्रियः ?

पद्मपादाचार्या पञ्चपादिकाऽरंभे—एवं शङ्कराचार्यान् वर्णयन्ति—

'नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम्।
अनुग्रहमुन्मृदितकालकलाञ्छनं विना विनायकमपूर्वशङ्करम्॥' इति।

अत्र 'निरस्तभूतिं-भस्मरहितं, निरस्तैश्वर्यं वा' इति ऋजुविवरणम्। परन्तु इतरविशेषणाणां सर्वेषामपि मूर्त्यन्वयित्वात्, स्तुतिप्रकरणे निरस्तैश्वर्यत्ववर्णनस्यानुचितत्वाच्च प्रसिद्धार्थ एव न्याय्य। अधिकं महामहोपाध्यायरामसुब्रह्मण्यशास्त्रिकृताणुभाष्यगांभीर्यादौ द्रष्टव्यम्॥

दीक्षितस्तु वादनक्षत्रमालायां भस्मरुद्राक्षधारणादीनां सकलपरब्रह्मविद्याङ्गत्वं साग्रहं साधयति। दीक्षितपूर्वतनेन केनाप्यद्वैतिना नायं आग्रहः प्रादर्शीत्यवधेयं सर्वैः॥

(१०) श्रीकृष्णार्पणमस्तु सर्वमिति यत् संप्रोच्यते वैदिकैः
सर्वैरप्यविगीतशिष्टसमयाचारप्रमाणानुगैः।
शैवास्त्वप्पयदीक्षितप्रभृतयः श्रीशङ्करार्यद्रुह
नाङ्गीचक्रुरिदं कथं नु खलु ते श्रीशङ्करार्यप्रियाः?

दक्षिणदेशे हि सुप्रसिद्धो विद्वान् दीक्षितमनीयः स्वानुष्ठितयज्ञान्ते 'श्रीकृष्णार्पणमस्तु' इति वक्तुमनिच्छन् 'शिवार्पणमस्तु' इत्येव वक्तुमिच्छन् ऋत्विक्प्रमुखै: कर्मसाद्गुण्याकांक्षिभिः निन्दितः परित्यक्तश्चान्तेऽवशात् निर्बन्धेन 'श्रीकृष्णार्पणमस्तु' इति रुदन्नवोचदिति सकलजगद्विदितम्। एवं पुरुषसूक्तसहस्रशीर्षानुवाकादिप्रतिपाद्यविषये दीक्षितोऽयं शङ्कराचार्यान् खण्डयत्येवेत्यादिकं विस्तरभयान्नेह प्रतन्यते॥

इदमत्र सारं—शङ्कराचार्यैः विष्णुसहस्रनामभाष्ये विष्णुपरतया योजितानि बहूनि श्रुतिवाक्यानि दीक्षितः शिवतत्त्वविवेकादौ शिवपराणि योजयन् तान् खण्डयत्येवेति॥

ननु विष्णुसहस्रनामभाष्यस्य शङ्कराचार्यकृतित्वे विवदन्ते केचिदिति किमवगच्छसि त्वम्? अवगच्छामि भोः! एवं गीताभाष्यस्य तत्कृतित्वेऽपि विवदन्ते केचिदित्यपि जानामि *॥ एवमेव विवदन्त-

*१९५८वत्सरीयभण्डार्कर्संशोधनालय३९ सचिका द्रष्टव्या॥

स्सूक्ष्ममतयः केचित् सूत्रभाष्योपनिषद्भाष्ययोरपि भिन्नकर्तृकत्वं सन्दि-हन्तीत्यप्यवगच्छ त्वम् ॥ ततश्च–

एवं विचारे निरतस्य चान्ते शिष्येत नैवापि च शङ्करार्यः ।
लब्धं विमर्शस्य फलं च सम्यक् ! सिद्ध्येन्न कुत्रापि तवाप्यभीष्टम् ॥

वस्तुतस्तु पूर्वं (पु-78)प्रदर्शिते प्राचीने नारायणं.यश्श्लोके गीता-भाष्यसहस्रनामभाष्ययोः शङ्कराचार्यकृतत्वं स्पष्टमभिहितम् ॥

अपि च प्रस्थानत्रयेऽपि शङ्कराचार्यैं नारायणपारम्यप्रकटनात तस्यानुपदं वक्ष्यमाणत्वात् दीक्षितस्य शङ्कराचार्यखण्डकत्वं दुरपह्नमेव ॥

स्थालीपुलाकन्यायेन दिङ्मात्रमिह दर्शितम् ।
शेषं हयशिरोरत्नभूषणादिषु लोक्यताम् ॥

किं बहुना ! श्रीकृष्णः स्वयमेव गीतायां 'ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति' इति रुद्रं सर्वभूतगुहाशयं निर्दिशन्, 'तमेव शरणं गच्छ' इति रुद्रमेव शरण्यमुपदिशन्, 'तमेव चाद्यं पुरुषं प्रपद्ये' इति तच्छब्दोत्तमपुरुषाभ्यां स्वभिन्नस्य पूर्वमुक्तस्य रुद्रस्यैव शरण्यत्वं स्वानुष्ठानं च प्रदर्शयन् रुद्रमेव स्वोत्कृष्टं गीतावेद्यं चाह -इति शैवा दीक्षिताद्यो भुजमास्फालयन्ति । एतेषां भुजं श्रीशङ्कराचार्या स्वयं कृन्तन्तीति पश्यन्तु सर्वेऽपि । 'ईश्वर सर्वभूतानां' 'तमेव शरण गच्छ' इत्यत्र शाङ्करं भाष्यं- 'ईश्वरः ईशनशीलो नारायणाख्यः सर्वभूतानां सर्वप्राणिनां हृद्देशे तिष्ठति। तमेवेश्वरं (उक्तनारायणाख्यं)शरण गच्छ' इति । 'ततः पदं तत् परिमार्गितव्यं+तमेव चाद्यं पुरुष प्रपद्ये' इत्यत्रापि शाङ्करं भाष्यं-'तत पश्चात् तत् पदं वैष्णवं परिमार्गितव्यं। कथं परिमार्गितव्यमित्याह—तमेव च-यः पदशब्देनोक्तः' आद्यं आदौ भवं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यम्' इति। एवञ्चात्र शङ्कराचार्याः इतिशब्दयोजनया-तत्रोत्तमपुरुषेण न कृष्णो विवक्षितः, किन्तु शरणवरणप्रकारोपदेशोऽयं सर्वान् प्रति इति प्रदर्शयन्तः-' सर्वधर्मान् परित्यज्य' इत्यत्र ' मामेक सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं शरणं व्रज' इति विवृण्वन्तः सर्वेषामप्येषां शैवाद्वैतिनां भुजं कृन्तन्त्येव जिह्वया सहेति पश्यन्तु निर्मत्सरा ॥

एवं सूत्रभाष्येऽपि स्मृत्यधिकरणे ईश्वरकारणतावादिनी स्मृतीरुदाहरन्तः शङ्कराचार्याः 'अतश्च संक्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः' इत्यादिनारायणपरब्रह्मत्वपरप्रमाणान्येवोद्धरन्तीति द्रष्टव्यम् ।

उत्पत्त्यसंभवाधिकरणवाक्यानि पूर्वमेव (51पु) प्रदर्शितानि । उपनिषद्भाष्यवाक्यानि तु अनुपदमेव प्रदर्शितानि ॥

तदेवं प्रस्थानत्रयेऽपि नारायणमेव परं ब्रह्म परं तत्त्वमुपलालयन्तः श्रीशङ्कराचार्याः विष्णुनामसहस्रकं विवृण्वन्तः कथं दीक्षितादिविष्णुविद्वेषिणां शैवानामनुकूला इति चिन्तयन्तु निर्मत्सराः ॥

स्यादुत्तमो वाऽप्यथवाऽधमो वा विष्णुः शिवान्नेदमिह प्रसक्तम् ।
मतत्रयाचार्यवरास्तु विष्णोः पारम्यमेवाहुरिति ब्रवीमि ॥

ननु शङ्कराचार्यप्रतिष्ठितेषु पीठेषु अनादेरेवकालात् शिवपूजाया एव प्राधान्यं वरीवृत्यते । तत्पीठाधिष्ठातारश्च शैववेषभूषाधारिण एव दरीदृश्यन्ते । अतश्च शङ्कराचार्यान् वैष्णवधुरीणान् वदन्तं भवन्तं कथं विश्वसिम इति चेत्—

किं वा वयं प्रतिभुवोऽद्यतनस्थितीनां
को वेद सत्यमिह मध्यदिनेषु वृत्तम् ।
सर्वे तटस्थविबुधा खलु शङ्करार्यान्
जानन्ति तत्कृतिभिरेव हि विष्णुभक्तान् ॥
आतो विलोक्य विमताद्यनस्थितिं त्वं
मा मुह्य वत्स विपर्येषु चिरन्तनेषु ।
रागादिदूषितधियो विदुषोऽपि लोके
गच्छेयुरेव विपथेषु यथाऽप्पयस्ते ॥

दर्शितमेवानुपदमेव शङ्कराचार्यदीक्षितयो अनैककण्ठ्यं तत्तद्ग्रन्थक्षीकरणेनैव । अतोऽपि किमवशिष्यते वक्तव्यम् ॥

एवं प्रतीपगामित्वे तयोः सिद्धे परस्परम् ।
ग्राह्योऽन्यतर एवैकः नोभौ ग्राह्यौ कथञ्चन ॥
आत्मानं ख्यापयन्तः त्रिचतुरवचनैः शङ्कराचार्यभक्तं
गच्छन्त्येके विरुद्धे पथि तु निगदिते स्वैरिणा दीक्षितेन ।
भक्तानां शङ्करार्ये कथमिव घटतां तत्प्रतिक्षेपकेऽस्मिन्
शैवे मैत्रीति सम्यग्विमृशतु निखिलो वैरमुत्सार्य दूरे ॥

ननु भो ! अस्मान् परं स्वैरमुपहसन् त्वं हरिहराद्वैतभूषणमुदाहरन् किमिति चक्षुषी निमील्य तत्त्वं निगूहसे । तत्र हि 16पुटे ‘ यद्यपि

सङ्गतमसङ्गतं वा शिवनिन्दकानामनिष्टं वक्तव्यमिति शिवभक्ताग्रगण्यैर्दीक्षितैः इदमसङ्गतमिति ज्ञात्वैवोक्तम् ' इति, 127पुटे—' तैर्विष्णुनिकर्षाभिधानं तु शिवनिन्दकानां यथाकथञ्चिदनिष्टं वक्तव्यमित्याशयेन ' इति च दीक्षितानां विष्णुविद्वेषो न वास्तविक इति स्पष्टमभ्यधायि । शिवार्कमणिदीपिकाऽपि चिन्नभूपालकारिता इत्येव तैरन्तेऽभिधीयते । अत एव–' महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि । न वस्तुभेदप्रतिपत्तिरस्ति मे ' इत्यूचुरेते दीक्षिताः ॥ एवञ्च शिवतत्त्वविवेकापातप्रतीतिमात्रेण दीक्षितान् शैवान् विष्णुविद्वेषिणः शङ्कराचार्यखण्डकांश्च न वक्तुं युक्तं विमर्शकंमन्यमानस्य तवेति चेत्—

प्रणमाम्यहमानतेन मूर्ध्ना यदि यूयं समवाप्तसद्विवेकाः ।
न तु विश्वसनीयमेतदेव न हि पश्यामि विवेकचिह्नलेशम् ॥

किमिति भोः चतुर्थं पादं निगूह्य दीक्षितं रिरक्षयिषसि । तमपि पठ । वयं वा पठामः । ' तथाऽपि भक्तिस्तरुणेन्दुशेखरे ' इति हि सः । एवं वदन् खलु त्वद्गुरु त्वयि कार्तज्ञ्यमवहन् भवन्तं सङ्कटे मज्जयतीति पश्य । यदि च सः वस्तुगत्या शङ्कराचार्यानुयायी स्यात् तदा ' तथापि भक्तिर्मधुसूदने मम ' इति खलु वदेत् । यदि तु प्रासत्यागे नाश्वासः तदा ' तताति तत्तित्ततुतूतते तत ' इति वा पठ्यताम् । अतश्च बोधेन्द्रवचनमपि चमत्कारमात्रम् । तेऽपि ' शिवभक्ताग्रगण्यैः दीक्षितैः ' इत्येव खलु वदन्ति । अत एव " तथापीदानीन्तनाः * सुदुर्भगाः दैवेन निर्दग्धाः सकलशास्त्रपाठयितारोऽपि केचनात्यन्तासङ्गतमपि तमर्थं ' दीक्षिता वेदार्थं निर्णीयोक्तवन्तः, तेषां सिद्धान्त एवायं ' इति गृह्णन्तः शिवमाश्रित्य विष्णुं निन्दन्तः शिवभक्तिफलमप्यप्राप्य नरकं गच्छन्तीत्यद्भुत भाति ' (पु-16) इति परोक्षं दीक्षितमुपालभन्ते । बोधेन्द्रसरस्वत्यः खलु दीक्षितोत्तरवयःकालिका इति प्रसिद्धिः । ततश्च तेषां काले लब्धप्रतिष्ठं दीक्षितं साक्षान्निन्दितुं एते सङ्कुचन्तीत्येतत् स्पष्टं युक्तञ्च ॥

ननु दीक्षितैरेवात्र हेतुरपि कथितः । शिवार्कमणिदीपिकोपक्रमे हि ' यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा ' इति स्वस्याद्वैत

* दीक्षितः वैष्णवान् सुदुर्भगान् निन्दति (शि त-वि श्लो ४)। तदभिप्रायेणात्र दीक्षितादिष्वयं स शब्दः बोधेन्द्रैः प्रत्यर्पितः ॥

एव परमतात्पर्यमभिधाय—'तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः। अद्वैत-वासना पुंसामाविर्भवति नान्यथा' इति शिवभजनहेतुमूचुस्ते। अतश्च वृथा मा निन्दतु—इति चेत्—एतदेव कुत इति पृच्छामो भवन्तम्॥

इदमल्पमपि कुतो न जानासि त्वम्? ज्ञानं हि परमपुरुषार्थसाधन-मविगीतम्। 'ज्ञानमिच्छेन्महेश्वरात्' इति वचनं च सकलविदितमे-वेति चेत्—महात्मन्! एतत्स्वरूपाटेतं 'मोक्षमिच्छेज्जनार्दनात्' इत्येत-दप्यवगच्छाम्यहम्। शङ्कराचार्या अपि सहस्रनामभाष्ये विश्वनाम-विवरणावसरे "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इद-मेकं सुनिष्पन्नं ध्येयो नारायणः सदा' इति महाभारतान्ते भगवता वेदव्यासेनोपसंहृतम्" इति, "हरिरेकः सदा ध्येयः भवद्भिः सत्त्व-संस्थितैः' इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं श्रीमहेश्वरेणापि" इति च वदन्तः 'उपसंहृत' पदं 'अपि' पदं च प्रयुञ्जानाः भवतोऽत्यन्तं प्रतिकूलाः। उक्तहरिवंशवचनसमनन्तरं खलु 'उपास्योऽहं सदा विप्रा उपायोऽस्मि हरेः स्मृतौ' इतीश्वरवचनं वर्तते। एवं च महेश्वरानुग्रहप्राप्यं मुक्तिहेतुभूतं ज्ञानं विष्णूपासनरूपमेव शङ्क-राचार्याणामपि सम्मतमिति स्पष्टम्॥

युक्तं चैतत् स्याद्विवेकाद्धि मुक्तिः
सत्त्वोन्मेषात् स्याद्विवेको नराणाम्।
सत्त्वोन्मेषः स्यात् हृषीकेशभक्त्या
केषाञ्चित्सा स्यात्तु रुद्रप्रसादात्॥

ये तु सर्वं परित्यज्य प्रपन्ना मधुसूदनम्।
स एव सर्वं तादृग्भ्यो दद्यादिति हि गीयते॥

दृष्टः कश्चित्पुराणादिषु किमु भगवद्विष्णुभक्तस्त्वधर्मे
सक्तस्त्रैलोक्यपीडाकरणरतमतिः शूलिना सूदितो वा।
दृष्टं तद्वैपरीत्यं बहुश इदमिहावेदयत्येव विष्णोः
सन्मार्गप्रेरकत्वं भवभयहरतां सात्त्विकोपास्यतां च॥

यद्यप्यभूतामसुरान्ववाये प्रह्लादबालश्च विभीषणश्च।
विष्णुं श्रितौ धर्मरतावभूतां निदर्शनं सात्त्विकतल्लजौ तौ॥

एवं च भक्तिस्तरुणेन्दुशेखरेत्येवं वदन्नप्पयदीक्षितस्तव।
मुधाग्रहं केवलमार्यदूषितं प्राकाशयत् नैव सदध्वगामिताम्॥

किमधिकोक्त्या? दीक्षितस्य भ्रातुः आच्चान् दीक्षितस्य पौत्रः नीलकण्ठदीक्षित स्वविरचिते नीलकण्ठविजयाख्ये चम्पूप्रबन्धे आदौ 'श्रीमानप्पयदीक्षितस्स जयति श्रीकण्ठविद्यागुरुः' इति दीक्षितं शैवगुरुं निर्दिशति। प्रत्याश्वासं चान्ते अप्पयदीक्षितं श्रीकण्ठमतप्रतिष्ठापनाचार्यमेव निर्दिशति। शिवतत्त्वरहस्येऽप्यन्ते दीक्षितः श्रीकण्ठमतप्रतिष्ठापनाचार्यत्वेनैव निर्दिष्टः। नलचरित्रनाटिकायामपि (पुट-3) दीक्षितजनकं रङ्गराजाध्वरिणं अद्वैतविद्यामुकुरविवरणदर्पणाद्यनेकप्रबन्धनिर्मातारं प्रशंसन् दीक्षितं पुनः 'श्रीकण्ठमतनिर्वाहधूर्वहः श्रीमानप्पयाध्वरी' इत्येवोपलालयति। दीक्षितेन अद्वैतमतस्य कियानुपकारः? शैवस्य च कियान्? इति सम्यक् तोलयन्तु तटस्था अपि। शैवा अप्येनं स्वीयमेव मन्वत इत्यपि प्रसिद्धमेव। तदेवं साक्षाद्दीक्षितपौत्रेणैव दीक्षितस्य श्रीकण्ठमतप्रतिष्ठापनाचार्यत्वे प्रख्यापितेऽप्यद्यतना अद्वैतिनः केचित् तं अद्वैतविद्याप्रतिष्ठापनाचार्यं ख्यापयन्तः किमिति स्वं परांश्च वञ्चयन्तीति प्रष्टव्या॥

> किं वक्तुमन्यदिह कारणमस्य शक्यं
> विष्णौ च तच्छ्रितजनेषु विरोधतोऽन्यत्।
> किं युक्तमेतदिति तेऽपि विचिन्तयन्तु
> द्रुह्यन्तु मा निजगुहान्तरवस्थिताय॥
> वय तु किलमन्महे बहव एव ते वञ्चिताः
> प्रतारकपरंपराकथितचाटुदुर्युक्तिभिः।
> गतानुगतिका अहो! न हि विदन्ति तत्त्वं परं
> किमेतदुचितं नु वो वदत शङ्करार्यानुगाः!

[उपसहारः]

तदेवं—वैष्णववैरात् स्वस्वरूपविरुद्धमपि शैवमतं प्रविशन् अयं अप्पयदीक्षित. श्रीशङ्कराचार्यकथितार्थविरुद्धतया प्रमाणानि योजयन् वस्तुत श्रीकण्ठं हरदत्तानुयायिनमपि हरदत्तानुयायिनं प्रतारयन्, आनन्दलहर्यां स्वस्य विष्णुविद्वेषाभावं नटयन्, साग्रहं शङ्कराचार्यानपि शैवान् प्रसाधयन्, स्ववचनविरोधं अपि अजानानः स्वहृदयविसंवादेनैव श्रीमद्रामानुजार्यान् श्रीकण्ठानुकारिणः वदन् पण्डितसन्नपि परप्रतारणायैव स्वैरं तत्र तत्र किञ्चित्किञ्चिल्लिखतीति तादृशवैष्णववैरतुन्दिलः निर्निरोधः श्रीकण्ठभाष्यं प्रणयेदेवेति नाविश्वसनीयं विमर्शकाणाम्॥

नन्तु त्वदुक्तस्य विमर्शनेन सत्यं तु तत्स्यादिति भाति चित्ते ।
अथापि तत्तादृशबुद्धिमत्त्वे ख्यातोऽनुकुर्यादितरं कुतोऽसौ ॥
वत्स ! भाष्यरचनं महात्मभिस्साध्यमस्य सुलभं कथं भवेत् ।
भाष्यकारपदवीं वहन्ति किं सर्व एव तु बुधोत्तमा अपि ॥

अपि च 72तमपुटं पुनरप्यवलोकय सावधानम् ॥

यद्वा श्रीकण्ठभाष्यस्य कर्ताऽन्यस्त्वप्पयाद्भवेत् ।
तथाऽपि तन्न प्राचीनं यतो दीक्षितकालिकम् ॥
ततश्च सिद्धं खलु लक्ष्मणार्यभाष्यं पुराणं सकलोपजीव्यम् ।
तथैव शैवाप्पयदीक्षितस्य मानातिगाग्रेसरता च सिद्धा ॥
इत्थं च दीक्षितवचःपुरुषोत्तमोक्त्योः
सिद्धा हि दीक्षितवचस्त्वयथार्थतैव ।
लोकप्रतारणपरं स्वगुरुद्रुहं तं
जिग्येऽप्पयं स तु यतः पुरुषोत्तमोऽसौ ॥
शैवाः श्रीकण्ठशैवानुकरणरसिकं लक्ष्मणार्यं यदीमे
निन्देरन्नन्धभक्तिप्रभवनिजमतश्रद्धया युज्यतेऽपि ।
तेषूदासत्स्वपि त्वं किमिति कृतमतिस्तानपीहातिशेषे-
ऽद्वैती सन्नप्यहो ते मतमिह मनुषे स्थापितं शैवमैत्र्या ॥
युज्येत रामानुजदूषणं ते त्वद्वैतिनो दार्शनिके विभागे ।
एतत्त्वशक्यं समभूत्तवाद्य ततोऽविशः शैवमतं किमु त्वम् ॥
अद्वैतिनां दार्शनिके विभागे दौर्बल्यमावेदयतीदमेव ।
यतो हि दृश्यन्त इमेष्वनेके नाद्वैतनिष्ठास्तु विशुद्धशैवाः ॥
शैवं वा सौगतं वा प्रविश मतमिह त्वं यथेष्टं, न हानि
का वा लज्जा निजेष्टानुकरणसरणौ , साध्वसं वा कुतस्ते ।
व्यर्थः क्लेशः किमर्थस्तव तु निजमतारोपणे शङ्करार्यै
त्यक्त्वा धैर्येण तं ते त्वनभिमततमं गच्छ मार्गं त्वदिष्टे ॥
नत्वा संप्रार्थयामः शुभगुणनिवहान् शङ्कराचार्यभक्तान्
त्यक्त्वा मात्सर्यमारात् कथितमिदमिहालोचयन्तु प्रगाढम् ।
पृच्छन्त्वात्मानमेते किमुत वयमिहाद्वैतिन शाङ्करा वा
शैवा वा दीक्षितीया इति विगतभया माऽऽत्मने द्रोहिणः स्युः ॥
तत्त्वमत्र कथितं सतां मुदे शङ्करार्यपदपद्मसेविनाम् ।
दूषयन्तु च गुरौ तथाऽत्मने दोहिणो निरयगामिनो मुधा ॥

तदेवं संप्रोक्तं निखिलमिह तत्त्वं सुविशदं
प्रमाणं विद्वांसस्त्रिकरणविशुद्धा गतभयाः ।
यदीहात्यल्पं वा स्वहृदयविरुद्धं यदि कथितं
भवेयं दुष्पारप्रचुरनिरयस्यैन्धनमहम् ॥
श्रीवैष्णवाः ! शृणुत तत्त्वमिदं, भवद्भिः
नोद्भजनीय इह कश्चिदपक्वबुद्धिः ।
उद्वेजितः स तु कठोरम् अपि पापमार्गं
युष्मास्वपीह निपतेत् फलमस्य नूनम् ॥
हे शाङ्कराः ! शृणुत वैष्णववद्वचो व
युक्तं कदर्थनमनं किमु चिन्तयध्वम् ।
नारायणः कुलधनं किमु वैष्णवानां
श्रीशङ्करार्यगुरुमुख्यसमर्चितोऽसौ ॥
जाने चिरं परिचितं न हि यत्नमं हातुं
शक्यं सुदुष्टमिति भातमपि स्वचित्ते ।
तत्त्वावबोधनविधावपि बाधकं किम् ?
कल्पेत नूनमपि सद्गतयेऽनुतापः ॥
एवं न्यरूपि दृढमन्न तु वस्तुतत्त्वं
श्रीरङ्गनाथयतिवर्यकृपाबलेन ।
सन्तीति सात्त्विकतमाः कतिचिद्धरण्यां
प्रीणातु सर्वहृदयस्थरमाहृदयास्थः ॥

इति भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्ति-स्वशेषतैकरसे
नानेन नव्यमङ्गलाभिजन वरदार्यदासेन तत्त्वनिर्णयैक-
प्रयोजनं श्रीकण्ठसमालोचनं स्वस्मै स्वप्रीतये
स्वयमेवाकारयत्

इति अभिनिवेशप्रकाशे प्रथमः कणः समाप्तः

॥ श्रीकृष्णार्पणमस्तु ॥

